लेखा चारोप्य, स्वभवनमयासीत्। तत्र च निषिद्धाशेषराजलोकप्रवेशः, प्रविश्य वल्लभोद्यानम्, सपरिवारेण केयूरकेण सहोत्ताम्यता चेतसा अचेतितमेव दिवसकरणीयं निर्वर्तयामास। निर्वर्त्य च पत्रलेखाद्वितीयः केयूरकमाहूयाब्रवीत्—'केयूरक, कथय देव्याः कादम्बर्याः समदलेखाया महाश्वेतायाश्च संदेशम्'।

इत्यभिहितवति चन्द्रापीडे, पुरः सप्रश्रयमुपविश्य, केयूरकोऽप्यगादीत् — 'देव, किं विज्ञापयामि। नास्ति मयि संदेशलवोऽपि देव्याः कादम्बर्याः, समदलेखाया महाश्वेताया वा। यदैव पत्रलेखां मेघनादाय समर्प्य, आगतेन प्रतिनिवृत्य मयायं देवस्योज्जयिनीगमनवृत्तान्तो निवेदितः, तदैवोर्ध्वं विलोक्य, दीर्घमुष्णं च निश्वस्य, सनिर्वेदम् 'एवमेतत्' इत्युक्त्वोत्थाय, महाश्वेता पुनस्तपसे स्वमेवाश्रमपदमाजगाम। देव्यपि कादम्बरी झटिति हृदये द्रुघणेनेवाभिहता, उन्मुक्तेव चान्तःकरणेन, अविदितमहाश्वेतागमनवृत्तान्ता, चिरमिव स्थित्वा 'महाश्वेतायाः कथय' इति मामूयमिव मामादिश्य, मदलेखाया पुनर्वलितमुखी, सविलक्षस्मितम् 'मदलेखे, अस्ति केनचिदपरेणैतत्कृतं करिष्यते वा, यत्कुमारेण चन्द्रापीडेन' इत्येवमभिदधती, उत्थाय शयनीये निपत्य, उत्तरवाससोत्तमाङ्गमवगुण्ठ्य, निर्विशेषहृदयवेदनां मदलेखामप्यनालपन्ती, सकलमेव तं दिवसमस्थात्। अपरेद्युश्च प्रातरेवोपसृतं माम् 'एवं दृढतरशरीरेषु ध्रियमाणेष्वेव भवत्सु, अहमीदृशीमवस्थामनुभवामि' इत्युपालभमानेव चिरमालोकितवती। तथा दृष्टश्च दुःखितया देव्या, आदिष्टमेव गमनायात्मानं मन्यमानोऽहम्, अनिवेद्यैव देव्यै, देवपादमूलमुपागतोऽस्मि। तच्च देवैकशरणजनजीवितपरित्राणा-

कुलमतेः केयूरकस्य विज्ञापनाकर्णनावधानदानेन प्रसादं कर्तुमर्हति देवः ।' देव, श्रूयताम्—यदैव ते प्रथमागमनेनामोदिना मलयानिलेनेव चलितं समस्तमेव तत्कन्यकालतावनम्, तदैव सकलभुवनमनोभिरामं भवन्तमालोक्य समारूढवान्मकरकेतनस्ताम्। इदानीं तु महान्तमायासमनुभवति त्वदर्थे कादम्बरी। चित्रं चेदम्। मकरकेतुहुतभुजा दह्यमानमप्यग्निशौचमंशुकमिव नितरां निर्मलीभवति लावण्यम्। मन्ये च, मृदुस्वभावमपि जलमिव मुक्ताफलतामुपगतं कठिनीभवत्युत्कण्ठितं हृदयमबलाजनस्य; यत्तादृशेनातिसंतापेनापि न विलीयते। बलवती खलु वल्लभजनसंगमाशा; यत्तथाविधमप्यनुभववेदनाविह्वलितप्राणमतिकष्टं प्राण्यते। किं करोमि। कथय, कथं कथ्यते, कया युक्तया प्रकाश्यते, कतमया वेदनयोपमीयते बलवती तदुत्कण्ठा। स्वप्नेषु विगलितवेदनाः स्फुटं प्राणिनः, प्रतिदिनं दृश्यमानोऽपि यत्र पश्यामि तामीदृशीमवस्थाम्। प्रचण्डकिरणसहस्रातपसहानि कमलानि शयनीकृतानि म्लानिमुपनयन्त्या दिवसकरमूर्तिरपि निर्जिता तया निजोष्मणा। मुहुर्लतामण्डपमधिवसति। मुहुः स्थलनलिनीवनमधिशेते। मुहुरुपवनसरोजलमवगाहते। तस्मादुत्थाय तमालवीथीमुपैति। एवंप्रायैश्च मदनदुश्चेष्टितायासैः परिणाममुपैति दिवसः।

१४ चन्द्रोदये चास्यास्तिमिरमयीवापैति धृतिः। कमलमयमिव दूयते हृदयम्। कुमुदमय इव विजृम्भते मकरकेतनः। चन्द्रकान्तमयमिव प्रक्षरति नयनयुगलम्। न विज्ञायते, किं मुग्धतया, किमुन्मादेन संगीतकमृदङ्गध्वनितेषु केकाशङ्कया धारागृहमरकतमणिमयूरमुखानि

न्थगयति । दिवसावसानेषु विश्लेषभीता मृणालसूत्रैश्चित्रभित्तिविलिखितानि चक्रवाकमिथुनानि संघटयति ।

अपि च, तस्याश्चन्दनपरिमल इव दक्षिणानिलेन सह समागच्छति मोहः । प्रतिरुतानीव वलभीकपोतकूजितैः सहाविर्भवन्ति दुःखानि । तथा च जलकणिकेव पद्मिनीपलाशस्थिता कम्पते । नलिनीव शशिकरस्पर्शेन म्लायति । चन्द्रमूर्तिरिव कमलप्रकरस्खलितपादपल्लवा संचरन्ती निशां नयति । कुमुदिनीव रजनिकरकिरणकृतप्रजागरा दिवसमलीकनिद्रयातिवाहयति । किं बहुना । संप्रति तस्याः, त्वन्नामा सर्वसखीजनः, त्वद्वृत्तान्तमुखरः परिजनः, त्वदालापनिर्मिताः सर्वविनोदाः, त्वदाकारमयश्चित्रकलाभ्यासः, त्वदुपालम्भगर्भा मागधीमङ्गलगीतयः, त्वद्दर्शनपुनरुक्ताः स्वप्नाः, त्वन्नामग्रहणैकोपायगम्यप्रबोधा मोहमहावेगाः' इत्यावेदयन्तं केयूरकम् 'भवतु, संप्रति न शक्नोम्यतः परं श्रोतुम्' इति आमीलनादत्तसंज्ञेव चन्द्रापीडमाक्रामन्ती मूर्च्छा न्यवारयत्; न तु पुनरवस्थानिवेदनपरिसमाप्तिः ।

तथा मूर्च्छानिमीलितश्च तामेवानुध्यायन्निव ससंभ्रमप्रतिपन्नशरीरेण केयूरकेण संभाविततालवृन्तया च पत्रलेखयानुभाव्यार्थसञ्ज्ञया च नियत्या संज्ञां लम्भितश्चन्द्रापीडः, स्वकृतपीडापराधेन भीतमिव लज्जितमिव निभृतस्थितं केयूरकमन्तर्बाष्पोपरुध्यमानकण्ठः कथमपि स्खलिताक्षरं प्रत्युवाच —'केयूरक, येन प्रकारेणैवमेकान्तनिष्ठुरहृदयमात्मन्यनुत्पन्नानुरागमेव मां संभाव्य देव्या कादम्बर्या दूरीकृतपुनर्मदागमनसंभावनया न त्वमागमनायादिष्टः, न संदिष्टं वा किंचिन्महाश्वेतया समुपहृतानुबन्धया, मदलेखया वा त्वन्मुखेन नोपालब्धोऽस्मि, तथा मयि

पत्रलेखया सर्वमाख्यातम्। तदभिजाततया दक्षिणतया चात्मानमात्मना भ कलयति देवी कादम्बरी। चन्द्रमूर्तेरालोकेन निश्चेतनस्य चन्द्रकान्ताख्यस्य पाषाणखण्डस्यार्द्रभावोपगमनमेवायत्तम्, न पुनस्तत्कराकर्षणम्। तत्र देव्याः कादम्बर्या एवाज्ञापराधिनी, ययाधरस्पन्दितमात्रप्रतीक्षे पुरःस्थायिनि दासजने निष्करुणतयात्मानमव्यापारयन्त्या परहृदयपीडानपेक्षिणी लज्जापेक्षिता, न जीवितसंदेहदायिनी देव्याः समवस्था। अथवा देव्याः परिजनस्यापि कोऽयमेवंविधो व्यामोहः; यदनिच्छन्त्यपि बलादसौ न व्यापारिता। कीदृशी चरणतलप्रतिबद्धस्य दासजनस्योपरि लज्जा। कीदृशं वा गौरवम्। अथवा क्रमागतमन्तर्धानं वामलोचनानाम्, विशेषतः कन्यकानाम्। लज्जा न पारिता नामास्मिञ्जने स्वयं परित्यक्तुं देव्या। मदलेखा तु द्वितीयं हृदयमस्याः। तया किमेवमहार्यसंयमधनैर्मुनिभिरप्यरक्षितहृदयापहारेणानिग्राह्यचौरेण कामेन दुरात्मनायास्यमानं देवीशरीरमुपेक्षितम्। किमिति तत्रस्थस्यैव मे कर्णे नावेदितम्। अधुना श्रुत्वापि दिवसक्रमगम्येऽध्वनि किं करोमि। यथा चास्य हतविधेः सर्वतो विसंष्ठुलं समारम्भं पश्यामि, तथा जानामि, नैवायमेतावता स्थास्यतीति। अन्यथा क्व निष्प्रयोजनाश्वमुखमिथुनानुसरणेनामानुषभूमिगमनम्। क्व च तत्र तृषितस्याच्छोददर्शनम्। क्व तत्तीरे विश्रान्तस्यामानुषगीतध्वनेराकर्णनम्। क्व तज्जिज्ञासागतस्य महाश्वेतावलोकनम्। क्व महाश्वेतया सह हेमकूटगमनम्। क्व तत्र देवीवदनदर्शनम्। क्व वा अपरिपूर्णमनोरथस्य मे पितुरलङ्घनीया आगमनाज्ञा। तत्सुदूरमारोप्य

पातिता वयं खल्वनेनाकार्यकारिणा दग्धवेधसा । तथापि देवीं संभावयितुं प्रयतामहे' ।

इत्यभिदधत्येव चन्द्रापीडे, भगवांस्तिग्मदीधिति: सजहार करसहस्रम् । अथ भगवति चन्द्रमसि उदयगिरिशिखरमारूढे, चन्द्रापीडस्तस्मिन्नेव वल्लभोद्याने चन्द्रमणिशिलातले विमुच्याङ्गानि, चरणसंवाहनोपसृतं केयूरकमवादीत्—'केयूरक, किमाकलयसि । यावद्वयं परापताम:, तावत्प्राणान्संधारयिष्यति वा देवी कादम्बरी । आगमिष्यति वा पुनस्तत्समाश्वासनाय महाश्वेता । द्रक्ष्यामि वा पुनस्तस्या: समुत्त्रस्तहरिणशावकायताक्षं मुखम्' इति ।

एवं वदन्, तमादिदेश विश्रान्तये केयूरकम् । आत्मनापि गमनचिन्तां प्राविशत्–'यदि तावदकथयित्वा अनिपत्य चरणयोरगृहीताशी: सहसानुत्संकलित एव तातेनाम्बया वापक्रम्य गच्छामि, ततो गतस्यापि मम कुतो वा फलावाप्ति:, कीदृशी वा हृदयनिर्वृति: । अथवा तिष्ठतु तावदियमुत्तरकालागामिनी चिन्ता । अपक्रम्य गत एव कथमहम् । तातेन स्वभुजादवरोप्य मय्येव राज्यभार: समारोपित: । तदनाख्याय पदमपि निर्याते मयि, अवश्यं सेवापरा राजान:, सुखपरिभुक्ता: प्रजा अपि, पृष्ठतो लगन्तीति मे चेतसि । अपि च, तातस्यापि कोऽपरोऽस्ति, यस्मिन्मदीयं स्नेहं संक्रमय्य, मय्यपक्रान्ते, 'यातु किमनेन गतेनागतेन वा' इत्यविनयकोपितोऽवष्टम्भं कृत्वा स्थास्यति । ताते च पृष्ठतो लग्ने, अष्टादशद्वीपमालिनी मेदिन्येवलग्ना भवति । तदा मया क्व गतम् । क्व स्थितम् । क्व विश्रान्तम् । क्व भुक्तम् । क्वात्मा मया गोपायितव्य: । समासादितेन वात्र कथं मया

वदनं दर्शयितव्यम्। पृष्टेन वा किमुत्तरं दातव्यम्। अपि च, सुबहुदिवसप्रवासोपतप्तः स्कन्धावारोऽपि मेऽद्यापि न परापतति। तेनापरसंविधानादर्धपथादेव निवृत्य पुनर्धावितव्यम्। अथवेद्य तातम्याम्बायाश्च, ताभ्यां च विसर्जितः, संविधानेन गच्छामि। तत्रापि किं कथयामि—मम स्नेहेन गन्धर्वराजपुत्री कादम्बरी दुःखं तिष्ठतीति, किं वा बलवान्मे तस्यामनुरागः, नानया विनाहं प्राणान्संधारयामीति। अपरोऽपि वा कश्चिद्व्यपदेशो न शक्यत एव पुनर्गमनाय कर्तुम्। अकथयित्वा च गमनकारणम्, कथमात्मानं मोचयामि। कथं वा मुञ्चतु तातोऽम्बा वा। तन्मुहूर्तमध्येऽस्मिन्नर्थेऽनर्थपतितः किं करोम्येकाकी। वैशम्पायनोऽप्यसंनिहितः पार्श्वे मे। कं पृच्छामि। केन सह निरूपयामि। को मे समुपदिशतु। को वापरो मयि दुःखिते दुःखी, सुखिते सुखी। को वापरो मयानुकोपितं तातमम्बां च परिबोध्य मां नेतुं समर्थः' इति।

एवं चिन्तयत एवास्य सा क्षपा दुःखदीर्घापि क्षयमगमत्। प्रातरेव च किंवदन्तीं शुश्राव, यथा किल — दशपुरं यावत्परागतः स्कन्धावार इति। तां च श्रुत्वा, समुच्छ्वसितचेताश्चकार चेतसि—'अहो धन्योऽस्मि, अहो विधेर्भगवतोऽनुग्राह्योऽस्मि, यस्य मेऽनुध्यानानन्तरमेव परागतो द्वितीयं हृदयं वैशम्पायनः' इति। प्रहर्षपरवशश्च प्रविशन्तमालोक्य दूरत एव कृतप्रणामं केयूरकमवादीत्—'केयूरक, करतलवर्तिनीं सिद्धिमधुनावधारय। प्राप्तो वैशम्पायनः' इति।

स तु तदाकर्ण्य, गमनपरिलम्बकृतया चिन्तयान्तःशून्य एव 'भद्रकमापतितम्। महती हृदयनिर्वृतिर्देवस्य जाता' इत्यभिदधदेवोपसृ-

न्योपविश्य, चन्द्रापीडं व्यज्ञपयत्—'देव, उपदर्शितपाण्डुच्छविः प्राचीव चन्द्रोदयमवश्यंभावि देवस्य गमनम् । अवश्यं च देवस्य देवीप्राप्त्या भवितव्यम् । केन कदाचिदवलोकितो ज्योत्स्नारहितश्चन्द्रमाः । किंतु यावद्वैशम्पायनः परापतति, यावच्च तेन सह गमनसंविधानं निरूपयति देवः, तावदवश्यं कालक्षेपेण भाव्यम् । यादृशी चाकालक्षमा देव्याः शरीरावस्था, तादृशी निवेदितैव मया । सर्वोऽपि प्रत्याशया धार्यते । देव्यास्तु पुनर्देवदर्शनेऽद्य यावन्निष्प्रत्याशमेव हृदयं केनाश्वासनेन वर्तताम् । मद्वार्तोपलम्भादेतदुत्पत्स्यते चेतसि, यथा—'अस्ति कार्यं मे जीवितेन । दुःखान्यपि महान्ति धारयाम्येतत्' इति । अतो विज्ञापयामि । चेतसा त्वग्रतो गत एव देवः, शरीरेणाप्यनुपदमुच्चलित एव । किमपरं मयात्र स्थितेनापि साधनीयम् । तद्देवागमनोत्सवावेदनाय गमनानुज्ञया प्रसादं क्रियमाणमिच्छति मे प्रणयप्रसाददुर्ललितं हृदयमिदानीमेव' ।

इति विज्ञापिते केयूरकेण, अन्तःपरितोषविकसितया दृष्ट्या दर्शितप्रसादश्चन्द्रापीडः प्रत्युवाच — 'किमुच्यते । कस्यापरस्येदृशी देशकालज्ञता । को वापरोऽस्मास्वेवं निर्व्याजभक्तिः । तत्साधु चिन्तितम् । गम्यतां देव्याः प्राणसंधारणाय । मदागमनप्रत्ययार्थं च पत्रलेखाप्यग्रतस्त्वयैव सह यातु देवीपादमूलम् । इयमपि प्रसादभूमिरेव देव्याः' इत्यभिधाय पृष्ठतः समुपविष्टाम् 'एवं न' इति पत्रलेखामप्राक्षीत् ।

कृतप्रस्थितिनिश्चयायां च तस्याम्, मेघनादमाहूय सोपग्रहमादिदेश—'मेघनाद, यस्यां भूमौ पत्रलेखानयनाय पूर्वं मया त्वं स्थापितः,

तां भूमिं यावत्पत्रलेखामादाय केयूरकेण सहाग्रतो गच्छ। अहमपि वैशम्पायनमालोक्यानुपदमेव ते तुरङ्गमैः परागतः' इत्यादिश्य, गमन-प्रणामोत्थितं केयूरकं सस्नेहमाहूय परिष्वज्य च, आत्मकर्णादपनीय कर्णाभरणम्, अस्य कर्णे कृत्वा, गद्गदिकागृह्यमाणाक्षरमवादीत्—'केयूरक, त्वया तु मे देवीसंदेशो नानीत एव। तत्किं तव हस्ते तदनुरूपं प्रतिसंदिशाम्यपूर्वम्। विज्ञापयितव्या देवी। तत्रापि किमलीकलज्जाजालभारोद्वहनेन त्वामायासयामि। यात्येव पत्रलेखा देवीपादमूलम्। इयं विज्ञापयिष्यति' इत्यभिदधदेव, पत्रलेखां प्रणयेनाभिमुखो भूत्वा बद्धाञ्जलिरभाषत — 'पत्रलेखे, साञ्जलिबन्धेन शिरसा प्रणम्य मदीयेन विज्ञाप्या देवी कादम्बरी—येन सर्वखलानां धुरि लेखनीयेन, तथा प्रथमदर्शनेऽपि वत्सलत्वात्स्वभावस्य दर्शितप्रसादातिशयां देवीं प्रणामेनाप्यसंभाव्य आगच्छता, प्रज्ञा जडतया, गौरवं लघुतया, प्रियंवदता पारुष्येण, कृतज्ञता कृतघ्नतया, सर्वगुणा एव दोषैः परिवर्तिताः; स कथमिवापरं गुणमवलम्ब्य पुनः परिग्रहाय विज्ञापयतु? केन चाङ्गीकरोतु देवी? तदेवमात्मना सर्वगुणहीनस्यापि मे देवीगुणा एवावलम्बनम्। इयमेव ते स्वभावसरसा दूरस्थमपि मदनहुतभुजा दह्यमानं रक्षत्येव सरलता। आनयत्येव स्थिरप्रतिज्ञता। संभावयत्येव महानुभावता। आलपत्येव प्रियवादिता। यच्च तथापि गत्वा निर्लज्जहृदयः पुनर्वदनदर्शनसाहसमङ्गीकरोमि, अत्रापि सत्प्रकृतयो देवीप्रसादा एव कारणम्। एते हि उदारभावात् क्षणपरिचिता अपि समारोपितजीवितप्रत्याशाः, न किंचिन्न कारयन्ति। शिक्षयन्ति सेवाचातुर्यम्। लज्जापसृतं हठादाकृष्योपसर्पयन्ति। यया वानपेक्षित-

गमनाज्ञया अनियन्त्रणत्वात् 'गतोऽहम्' इति विज्ञप्तम्, सैव वाणी विज्ञापयति—यथा च मे न निष्फलमागमनं भवति, जगद्वा शून्यम्, तथा देव्यात्मसंधारणायात्मनैव यत्नः कार्यः' इति संदिश्य पुनराह – 'पत्रलेखे, त्वयापि यान्त्याध्वनि न मद्विरहपीडा भावनीया। न शरीर-संस्कारेऽनादरः करणीयः। नाहारवेलातिक्रमणीया। न येन केनचि-दज्ञातेन पथा यातव्यम्। किं करोमि। त्वत्तोऽपि मे वल्लभतरा देवी-प्राणाः, येनैवमेकाकिनी तेषां संधारणाय विसर्जितासि। अपि च, मम जीवितमपि तवैव हस्ते वर्तते। तन्नियतं त्वयात्मा यत्नेन परिरक्ष-णीयः' इत्युक्त्वा, सस्नेहं परिष्वज्य, केयूरकं पुनस्तद्वचानदानाय संवि-धाय, 'महाश्वेताश्रमं यावत्पुनस्त्वयैव सहानया मन्त्रयनायागन्तव्यम्' इत्यादिश्य व्यसर्जयत्।

निर्गतया च केयूरकेण सह पत्रलेखायाम्, 'किं शीघ्रमेते यास्यन्ति नवेति, कियद्भिर्वा दिवसैः परापतिष्यन्ति' इत्यनयैव चिन्तया शून्यहृ-दयः क्षणमिव स्थित्वा, स्कन्धावारवार्तास्फुटीकरणाय वार्ताहरं विसर्ज्य, बहुदिवसान्तरितदर्शनस्य वैशम्पायनस्य प्रत्युद्गमनायात्मानं मोचयितुं पितुः पादमूलमगात्। 23

अथ तारापीडो दूरत एव कृतप्रणामं चन्द्रापीडमपरिसमाप्ता-वलोकनस्पृहेण चक्षुषा सुचिरमालोक्यात्योपारूढयौवनभराभिरामत-राण्यङ्गप्रत्यङ्गानि, पाणिना स्पृष्ट्वा, दर्शयञ्शुकनासमवादीत् — 'शुकनास, पश्य, इयमायुष्मतश्चन्द्रापीडस्योपाहितपरभागा लक्ष्म-च्छायेव चन्द्रमसः श्मश्रुराजिलेखा समन्तात्समुद्भिन्ना। विवाहमङ्गल-योग्यां दशामारूढोऽयम्। तद्देव्या विलासवत्या सह संमन्त्र्य, साभि- 24

जनरूपा निरूप्यतां काचिज्जगति राजकन्यका । दृष्टं हि दुर्लभदर्शनं वत्सस्य वदनम् । संप्रति वधूमुखकमलदर्शनेनानन्दयाम आत्मानम्' इत्युक्तवति तारापीडे, शुकनासः प्रत्युवाच — 'साधु चिन्तितं देवेन । अनेन तु सहृदयेन हृदये समारोपिता एव सर्वविद्याः । स्वीकृता एव सर्वाः प्रजाः । ऊढैव चतुरुदधिमेखलाकलापभूषणा भूः । किमपरमवशिष्यते, येन न परिणीयते' इत्यभिहितवति शुकनासे, लज्जावनम्रवदनश्चन्द्रापीडश्चकार चेतसि—'अहो संवादः, येन मे कादम्बरीसमागमोपायचिन्तासमकालमेवेदृशी तातस्य बुद्धिरुत्पन्ना । तद्यदुच्यते—अन्धकारे प्रविष्टस्यालोकः, म्रियमाणस्योपर्यमृतवृष्टिरिति, तदेतदापतितं मयि । सर्वथा वैशम्पायनदर्शनमात्रकान्तरिता वर्तते मे कादम्बरीप्राप्तिः' इत्येवं चिन्तयत्येव चन्द्रापीडे क्षितिपतिरुत्तस्थौ । उत्थाय च तमेव समवलम्ब्यासन्नदेशे, विलासवतीभवनमगमत् । गत्वा च ससंभ्रमकृताभ्युत्थाना विलासवतीमूर्ध्वस्थित एवावादीत्—'देवि पश्य, एषा वत्सस्य विजृम्भमाणा श्मश्रुराजिशोभा विवाहमङ्गलसंपादनायादिशति । त्वमपरं किमादिशसीति प्रष्टव्या । तदादिशतु देवी । कथ्यमानेऽपि, किमपरम्, अद्यापहरसि वदनमन्यतो व्रीडया । पृष्टा वा कर्तव्यं नाज्ञापयसि । वरमातासि संवृत्ता । जानामि, चन्द्रापीडस्योपर्यप्रीतिरेषा, यदेवमेतत्कार्येष्वनादरोऽवधीरणा च' इत्येवंविधैर्नर्मप्रायैरालापैः सुखायमानचेताश्चिरमिव स्थित्वा, शरीरस्थितिसंपादनाय निरगात् ।

चन्द्रापीडोऽपि शुकनासमुखेनैव वैशम्पायनप्रत्युद्गमनायात्मानं

मोचयित्वा, जननीभवन एव निर्वर्तितशरीरस्थितिः, वैशम्पायनप्रत्युद्गमनसंविधानविनोदेनैव तं दिवसमनयत् ।

अवतीर्णायां च तस्यां यामिन्याम्, सुहृद्दर्शनौत्सुक्येन शयनगतोऽपि जाग्रदेव समधिकमिव यामद्वयं स्थित्वा, सर्वतो दिवसबुद्धिमुत्पादयद्भिः वर्षाभिरिव ज्योत्स्नाप्रवाहैः चन्द्रपादैर्द्विगुणीकृतगमनोत्साहः, गमनसंज्ञाशङ्खनादादायादिदेश ।

अनन्तरं चोत्थाप्यमानैश्च, उत्थितैश्च, आरोप्यमाणपर्याणैश्च, पर्याणितैश्च, अपर्याप्तराजद्वाराङ्गणैस्तुरंगमसहस्रैः, तत्क्षणं कुन्तवनमयमिवान्तरिक्षम्, खुररवमयीव मेदिनी, हेषारवमयानीव श्रोत्रविवराण्यभवन् । अचिराच्च गृहीतसमायोगः, अङ्गणगतमिन्द्रायुधमारुह्य, बहुत्वात्तुरंगमबलस्य कृच्छ्रलब्धसञ्चारः, कथं कथमपि निर्जगाम नगर्याः । निर्गत्य चादूरत एव निसर्गस्वाच्छ्योत्स्नापूरस्याच्छतया च दुर्विभावपानीयामुत्तीर्य सिप्राम्, अतिप्रहतस्पन्दसंकटत्वाच्च वर्धयन्निव गमनोत्साहं दशपुरगामिना मार्गेण प्रावर्तत गन्तुम् ।

अथोह्यमानैरिव रयवाहिना नक्तंदिङ्मुखप्रसृतेन ज्योत्स्नाजलस्रोतसा वाजिभिः, तावत्यैवापररात्रेलब्धया योजनत्रितयमलङ्घयन् । अथाध्वश्रमापहरणायेव प्रवृत्ते वातुमाह्लादकारिणि रजनिविरामपिशुने मातरिश्वनि, क्रमेण च प्रत्यग्रगगनलक्ष्मीवियोगसंतापोज्झिते धवलोत्तरीयांशुक इव शशाङ्कलग्ने गलति चन्द्रिकालोके, अपरजलधिपातिना ज्योत्स्नाजलप्रवाहेणेव सहसा फेनबुद्बुदावलीष्विव नश्यन्तीषु तारकापङ्क्तिषु, पुनर्विभाव्यमानसहजश्यामकान्तिषु सलिलादिवोन्मज्जत्सु तरुलताविटपेषु, तिरोधानकारिणी नीलतिरस्करिणीमिव करै-

रुत्सार्य तिमिरमालां विरहविधुरां कमलिनीमिवालोकयितुमुदयगिरिशिखरमारूढे भगवति सप्तलोकचक्षुषि सप्तवाहे, दृष्टिप्रसरक्षमायां वेलायाम्, सहसैवागतोऽर्धगव्यूतिमात्र एव रात्रिप्रयाणकायातम्, आयासितायततरदृष्टिभिरप्यदृष्टपर्यन्तम्, संचारिणं द्वितीयमिव मेदिनीसंनिवेशम्, स्कन्धावारमद्राक्षीत् ।

दृष्ट्वा च 'अहो भद्रकं भवति, यद्यचिन्तितागमन एव प्रविश्य वैशम्पायनं पश्यामि' इत्येवं चिन्तयित्वा मूर्धानमावृत्योत्तरीयेण, रयविशेषग्राहिणेन्द्रायुधेन स्कन्धावारमाससाद । प्रविशंश्च प्रत्यावासकं वहन्नेव 'कस्मिन्प्रदेशे वैशम्पायनावासः' इति पप्रच्छ । ततस्तत्संनिहिताभिः स्त्रीभिः, इतरत्वादप्रत्यभिज्ञाय, यथारब्धकर्मव्यग्राभिरेवोद्बाष्पशून्यवदनाभिः 'भद्र, किं पृच्छसि, कुतोऽत्र वैशम्पायनः' इत्यावेद्यमानः, 'आः पापाः, किमेवमसंबद्धं प्रलपथ' इति शून्यहृदय एव ताः प्रतारयन्, अन्तर्भिन्नहृदयत्वान्नापराः पृच्छन्, न किंचित्पश्यन्, न किंचिद्वदन्, क्वागतोऽस्मि, किमर्थमागतोऽस्मि, किं वा करोमि, इति सर्वमेवाचेतयमानः, अन्ध इव, मूक इव, कटकमध्यदेशं यावत्तादृशेनैव वेगेनावहत् ।

अथेन्द्रायुधप्रत्यभिज्ञानात् 'देवश्चन्द्रापीडः' इति समन्तात्ससंभ्रमप्रधावितानामुद्बाष्पशून्यदृष्टीनां राजन्यसहस्राणां मुखान्यवलोक्य, 'क्व वैशम्पायनः' इत्यपृच्छत् । ततस्ते सर्वे सममेव विचार्य, 'अस्मिंस्तरुतलेऽवतरतु तावद्देवः । ततो यथावस्थितं विज्ञापयामः' इति न्यवेदयन् । चन्द्रापीडस्य तेन तेषां स्फुटाख्यानादपि कष्टतरेण वचसान्तःशल्यगर्भं स्फुटितमिव हृदयमासीत् । केवलं तत्कालप्रणयिनी मूर्छा

सा धारणमकरोत्। तुरगादवतारितं च पार्थिवैर्धृतमात्मानं तदानीं न वेदितवान्।

उपलब्धसंज्ञोऽपि च वैशम्पायनस्यादर्शनात् 'किमारटामि, किं हृदयमवष्टभ्य तूष्णीमासे, किमात्मानमाहत्य हृदयात्प्राणैर्वियोजयामि, किमेकाकी कांचिद्दिशं गृहीत्वा प्रव्रजामि' इति कर्तव्यमेव नाध्यगच्छत्। चकार च चेतसि — 'अहो मे रम्योऽप्यरमणीयः संवृत्तो जीवलोकः। वसन्त्यपि शून्यीभूता पृथ्वी। सुरक्षितमपि मुषितं जीवितफलम्। कं पश्यामि। केन सह सुखमासे। किमद्यापि मे जीवितेन, कादम्बर्यापि। वैशम्पायनस्य कृते क्व गच्छामि। को मे ददातु पुनस्तादृशं मित्ररत्नम्। कथं मया तातस्य शुकनासस्य चात्मा वैशम्पायनेन विना दर्शयितव्यः। किमभिधाय च तनयशोकविह्वलाम्बा मनोरमा वा संस्थापयितव्या। किं भूमिः काचिदसिद्धा, तां साधयितुं पश्चात्स्थितः' इत्येतानि चान्यानि चान्तरात्मना चिरमधोमुख एव विकल्प्य कृच्छ्रादिव तानप्राक्षीत् — 'मय्यागते, किं कश्चिदेवंविधोऽन्तरे संग्राम उत्पन्नः? व्याधिर्वा कश्चिदाशुकार्यसाध्यरूपः समुपजातः? येनैतदतर्कितमेव महावज्रपतनमुपनतम्' इति।

ते त्वेवं पृष्टाः सर्वे सममेव करद्वयापिहितश्रुतयो व्यज्ञपयन्— 'देव, शान्तं पापम्। देवशरीरमिव साग्रं वर्षशतं ध्रियते वैशम्पायनः' इति। एतदाकर्ण्य चोज्जीवित इवानन्दबाष्पनिर्भरः, संभाव्य तान्सर्वानेव कण्ठग्रहेण, अवादीत् — 'जीवतो वैशम्पायनस्यान्यत्र क्षणमप्यवस्थानमसंभावयता मयैवं पृष्टा भवन्तः। तज्जीवतीत्येतानि तु तावत्कर्णे कृतान्यक्षराणि। अधुना 'किं वृत्तमस्य? येनासौ नागतः।

कथं वा भवद्भिर्बलादपि नानीतोऽसौ' इत्येतदवगन्तुमुत्ताम्यति मे हृदयम्' इति। ते चैवं पृष्टा व्यज्ञपयन्—'देव, श्रूयतां यथावृत्तम्—गतवति देवे, तस्मिन्दिवसे न दत्तमेव प्रयाणं स्कन्धावारेण। अन्यस्मिन्नहनि, आहतायां प्रयाणभेर्याम्, प्रातरेवास्मान्वैशम्पायनोऽभ्यधात्—'अतिपुण्यं ह्यच्छोदाख्यं सरः पुराणे श्रूयते। तदस्मिन्स्नात्वा प्रणम्य भगवन्तं महेश्वरं व्रजामः। दिव्यजनसेविता केन कदा पुनः स्वप्नेऽपि भूमिरियमालोकिता' इत्यभिधाय, चरणाभ्यामेवाच्छोदसरस्तीरमयासीत्। तत्र चातिरम्यतयैव सर्वतो दत्तदृष्टिः संचरन्, आस्पदमिव सर्वरमणीयानाम्, अन्यतमं तटलतामण्डपमद्राक्षीत्।

दृष्ट्वा च तम्, अतिचिरान्तरितदर्शनं सुहृदमिवानन्यदृष्टिर्विस्मृतनिमेषेण चक्षुषा विलोकयन्, स्तम्भित इव, किमप्यन्तरात्मना स्मरन्निव गलितलोचनपयोधारासंतानः, तूष्णीमधोमुखस्तस्थौ। तथावस्थितं च तमवलोक्य, अस्माकमुदपादि चेतसि चिन्ता— 'येन केनचिदपह्रियन्त एव रसिकहृदयाः परिणामधीरमतयोऽपि, किं पुनः कुतूहलास्पदे प्रथमे वयसि वर्तमानाः। तस्मान्नियतमियमस्येमामतिमनोहरां भूमिमालोक्य भावयतो हृदयविकृतिर्निदर्शिता जाता' इति। चिराच्च तमेवमवदाम वयम्— 'दृष्टा दर्शनीयानामवधिरेषः। तदुत्तिष्ठ। संप्रति निर्वर्तयामः स्नानविधिम्। अतिमहती वेला। सज्जीभूतं साधनम्। प्रयाणाभिमुखः सकलः स्कन्धावारस्त्वां प्रतिपालयन्नास्ते। किमद्यापि विलम्बितेन' इति। स त्वेवमुक्तोऽप्यस्माभिः, अश्रुतास्मदीयालाप इव तमेव केवलमनिमेषपक्ष्मणा चक्षुषा लतामण्डपमालोकितवान्।

पुनः पुनश्चास्माभिरागमनायानुरुध्यमानः, तद्ग्रथितदृष्टिरेवास्मान्परिच्छेदनिष्ठुरमाह स्म—'मया तु न यातव्यमस्मात्प्रदेशात्। गच्छन्तु भवन्तः स्कन्धावारमादाय। न युक्तं भवतां चन्द्रापीडभुजबलपरिरक्षितं गते तस्मिन्महासाधनं गृहीत्वास्यां भूमौ क्षणमप्यवस्थानं कर्तुम्' इत्युक्तवन्तं तादृशासंबद्धानुष्ठानेन जातपीडा निष्ठुरमप्यभिहितवन्तो वयम्—'एवं न युक्तमस्माकं स्थातुम्। भवतः पुनर्देवस्य तारापीडस्यानन्तरादार्यशुकनासाल्लब्धजन्मनो देवेन चन्द्रापीडेन सहैकत्र संवृद्धस्य युक्तमिदम्, यज्ज्येष्ठे भ्रातरि सुहृदि वत्सले भर्तरि च भवति सर्वमर्पयित्वा गते, तत्परित्यागेनात्रावस्थानम्। कस्यापरस्येदृशो युक्तायुक्तपरिच्छेदः। तिष्ठतु तावदस्माकं तवोपरि स्नेहो भक्तिर्वा। अस्मिंस्तु शून्यारण्ये भवन्तमेकाकिनमुत्सृज्य गताः सन्तो देवेन चन्द्रशीतलप्रकृतिना चन्द्रापीडेनैव किं वक्तव्या वयम्। किमन्यो देवश्चन्द्रापीडः, अन्यो वा भवान्। तदुन्मुच्यतामयं संमोहः। गमनाय धीराधीयताम्' इत्यभिहितोऽस्माभिः, ईषदिव विलक्षहासेन वचनेनास्मानवादीत्—'किमहमेतावदपि न वेद्मि, यद्गमनाय मां भवन्तः प्रबोधयन्ति। अपि च, चन्द्रापीडेन विना क्षणमप्यहमन्यत्र न पारयामि स्थातुम्। एषैव मे गरीयसी परिबोधना। तथापि किं करोमि। अनेनैव क्षणेन सर्वत्र विगलितं मे प्रभुत्वम्। तथा हि — स्मरदिव किमपि, मनो नान्यत्र प्रवर्तते। पश्यन्तीव किमपि, न दृष्टिरन्यतो वलति। निगडिताविव पदमपि दातुं न चरणावुत्सहेते। कीलितेव चास्मिन्नेव स्थाने तनुः। तदात्मना त्वहमसमर्थो यातुम्। अथ बलाद्भवन्तो मां निनीषवः, तत्रापि चलितस्यास्मात्प्रदेशादात्मनो जीवितधारणं न संभावयामि।

अत्र तु पुनस्तिष्ठतः, यदेतदन्तर्हृदये किमप्यनवसीयमानं परिवर्तते मे, येनैव, विधृतोऽस्मि, तेनैवावश्यं धार्यन्ते प्राणा इति चेतसि मे। तदलं निर्बन्धेन। गच्छन्तु भवन्तः। भवतु यावज्जीवमा तृप्तेश्चन्द्रापीडदर्शनसुखम्। अल्पपुण्यस्य तु तन्मे प्राप्तमपि करतलादेवमाच्छिद्य दैवेन नीतम्' इत्यभिदधानश्च, कौतुकात् 'किमेतत्? येनैवं भाषसे। नायासि देवस्य चन्द्रापीडस्य समीपम्?' इत्यस्माभिः पुनः पुनः पृष्टोऽभ्यधात् — 'लज्जेऽहमेवं वक्तुम्। तथापि शपामि वयस्यचन्द्रापीडस्यैव जीवितेन — यदि किंचिदपि जानामि, यत्केन कारणेन न शक्नोम्यतो गन्तुमिति। अपि च, भवतामपि प्रत्यक्ष एवायं वृत्तान्तः। तद्व्रजन्तु भवन्तः' इत्युक्त्वा तूष्णीमभूत्।

मुहूर्तादिव चोत्थाय, किमपि नष्टमिवान्विष्यन् बभ्राम। भ्रान्त्वा च चिरमिव खिन्नान्तरात्मा मनिर्वेदमूर्ध्वं निश्वस्य, तस्मिन् लतागहने पुनरुपविश्य, तस्थौ। वयमपि तत्प्रतिबोधनप्रत्याशया स्थिता एव। गतवति समधिक इव यामद्वये, शरीरस्थितिकरणायास्माभिरभ्यर्थितः प्रत्युवाच — 'वयस्यचन्द्रापीडस्य खल्वमी स्वजीवितादपि वल्लभतराः प्राणाः। तद्यदि बलादपि परित्यज्य मां गच्छन्ति, तथाप्येषां संधारणे मया प्रयत्नः कार्यः। किं पुनरगच्छतामेव। चन्द्रापीडदर्शनेनैव चाहमर्थी, न मृत्युना। तदभ्यर्थनैवात्र निष्फला' इत्यभिधायोत्थाय, स्नात्वा, कन्दमूलफलैर्वनवासोचिता शरीरस्थितिमकरोत्। निर्वर्तितशरीरस्थितौ तस्मिन्, वयमपि कृतवन्तः। अनेनैव च क्रमेण विस्मितान्तरात्मानो रात्रौ च दिवा च 'किमेतत्' इति तद्वृत्तान्तमेवानुभावयन्तो दिनत्रयं स्थित्वा, निष्प्रत्याशा आगता

वयम् । यच्चाग्रतो न प्रेषितः संवादकः, तदेकं तावत् — अन्तरा गच्छतो देवस्यासौ न परापतत्येव; अपरमपि — चिरात्प्रविष्टमात्रस्यैव देवस्य मा पुनरागमनक्लेशो भूदिति' ।

चन्द्रापीडस्य तु तं स्वप्नेऽप्यनुत्प्रेक्षणीयं वैशम्पायनवृत्तान्तमाकर्ण्य, युगपदुद्वेगविस्मयाभ्यामाक्रान्तहृदयस्योदपादि, चेतसि — 'किं पुनरीदृशस्य वैराग्यस्य कारणं भवेत्? स्वीयं च न पश्यामि किंचित्स्खलितम्। तातप्रसादात्तु मामिव तमप्यर्चन्त्येव राजानः । ममेव तस्यापि चेच्छाधिकेषु सर्वोपभोगेषु न किंचिदपि हीयते । अभ्यागच्छंस्तातेनाम्बया चार्यशुकनासेन मनोरमया च तनयस्नेहोचितेन सौहार्देन न संभावितः । विनयाधिक्येच्छुना तातेन शुकनासेन वा किंचित्पीडाकरमभिहितम्। ताडितो वा । तत्रापि नैवासावेवमस्नेहलः, यः कश्चिदिव क्षुद्रप्रकृतिः, आढ्यपुत्रतागर्वितः, पुत्रैकतादुर्ललितो वा, यो जन्मनः प्रभृति सर्वप्रकारोपकारिणो गुरुजनस्योपरि खेदमेवं कुर्यात्, अनुबन्धाद्विरमेद्वा । प्रशमस्यापीदृशस्य नैष कालः । अद्याप्यसौ विद्वज्जनोचिते गार्हस्थ्य एव न निवेशितः । देवपितृमनुष्याणामानृण्यमेव नोपगतः । अगत्वा चानृण्यम्, ऋणत्रयेण बद्धः क्व गतः । न तेन पुत्रपौत्रसंतत्या वंशः प्रतिष्ठां नीतः । नानन्तदक्षिणैर्महाक्रतुभिरिष्टम्। न गुरवोऽनुवृत्त्या सुखं स्थापिताः । न स्निग्धबन्धूनामुपकृतम् । न जातेन जीवलोकसुखान्यनुभूतानि । न तेन पुरुषार्थसाधनानां धर्मार्थकामानामेकोऽपि हि प्राप्तः । किमेतत्तेन कृतम्' । इत्याक्षिप्तचेताश्चिन्तयंश्चिरमिव तस्मिन्नेव तरुतले स्थित्वा, ततस्तत्क्षणकृतम्, उभयपार्श्वस्थापितोत्पल्लवमुखपूर्णहेमकलशं कायमानमविशत् ।

प्रविश्य चागृहीतप्रतिकर्मतया मलिनवेषैः कर्मान्तिकैः प्रणम्यमानः, तूष्णीमेव शनैः शनैर्वासभवनमयासीत्। तत्र चापनीतसमायोगः, विमुच्याङ्गानि शयनीये, पुनरपि चिन्तामेवाविशत् — 'यदि तावदप्रतिमुक्तस्तातेनाम्बया वा, महति शोकार्णवे निक्षिप्य तौ, तनयविरहशोकविक्लवं तातं शुकनासमम्बां च मनोरमामनाश्वास्य, अस्मादेव प्रदेशाद्गच्छामि, तदा मयापि वैशम्पायनस्यानुकृतं भवति। निवृत्य पुनर्गमने च, अमुक्तिपक्षमाशङ्कते मे हृदयम्। तत्किं करोमि। अथवा अस्थान एवाप्रतिमुक्तिशङ्का मे। प्रियसुहृदा आत्मानं मां च परित्यजताप्यपरेण प्रकारेण गमनमुत्पादयता कादम्बरीसमीपगमनोपायचिन्तापर्याकुलमतेरुपकृतमेव मे। तदधुना वैशम्पायनप्रत्यानयनाय यान्तं न तातो नाम्बापि नार्यशुकनासोऽपि निवारयितुं शक्नोति माम्। गतश्च वैशम्पायनसहितस्तेनैव पार्श्वेन पुरस्ताद्गमिष्यामि' इति निश्चित्य, तत्कालकृतं वैशम्पायनवियोगदुःखं परिणामसुखमौपधमिव बहु मन्यमानः, मुहूर्तमिव स्थित्वा विश्रान्तः सुखितैरङ्गैः, आपूरिते तृतीयार्धयामशङ्खे शरीरस्थितिकरणायोदतिष्ठत्।

उत्थाय च 'यत्रैव कादम्बरी, तत्रैव वैशम्पायनः' इति स्वधैर्यावष्टम्भेनैव संस्तभ्य हृदयम्, शून्यान्तरात्मा शरीरस्थितिमकरोत्। कृताहारश्च गगनतलमध्यमारूढे सवितरि, निर्भिद्य विशन्तीष्विव शरीरमातपकणिकासु, उत्थाय सरस्तीरकल्पितं जलमण्डपमयासीत्।

१ लोहितायमानातपे च सायाह्ने, निर्गत्य वासभवनाङ्गणे क्षणमिव स्थित्वा, 'द्वितीय एव यामे चलितव्यम्, सज्जीकुरुत साधनम्' इत्यादिश्य बलाध्यक्षम्, वासभवनमध्यवसत्। अथातिचिरान्तरितोज्ज-

यिनीदर्शनोत्सुको विनापि प्रयाणनान्द्या सकल एव कटकलोकः संवृत्य प्रावर्तत गन्तुम्। आत्मनाप्यलब्धनिद्राविनोदः, अवतरत्येव तृतीये यामे, राजलोकेन सहावहत्। अथाध्वनैव सह क्षीणायां यामवत्याम्, रसातलादिवोन्मज्जत्सु सर्वभावेषु, पल्लव इवोद्भिद्यमाने पूर्वाशालताया दिवसकरबिम्बे, कटकलोकेनैव सह परापतितवानुज्जयिनीम्।

अथ दूरत एव दत्तकतिपयशून्यपदैश्च, महाकष्टशब्दमुखरैश्च, दुःखाधिक्याहितमौनैश्च, निःस्पृहैरपि, उदासीनैरपि, दुर्जनैरपि, स्नेहपरवशैः, पितृभिरिव, सुहृद्भिरिव च, नगरीनिर्गतैः, आर्त्या पृच्छ्यमानं च कथ्यमानं च वैशम्पायनवृत्तान्तमेव समन्ताच्छुश्राव।

शृण्वंश्च चकार चेतसि—'बाह्यस्य तावज्जनस्येयमीदृशी समवस्था। किं पुनर्येनासावङ्केन लालितः संवर्धितो वा। तदतिकष्टं मे वैशम्पायनेन विना तातस्य शुकनासस्याम्बाया मनोरमाया वा दर्शनम्' इत्येवं चिन्तयन्, नासानिहितोद्बाष्पदृष्टिः, अदृष्टसर्ववृत्तान्त एव विवेशोज्जयिनीम्। अवतीर्य च स राजकुलद्वारि विशन्नेव 'आर्यशुकनासभवनं सह देव्या विलासवत्या गतो राजा' इति शुश्राव। श्रुत्वा च निवर्त्य तत्रैव जगाम। गच्छंश्च समीपवर्ती, 'हा वत्स वैशम्पायन, अद्यापि मदङ्कलालनोचितो बाल एवासि। कथं त्वमेकाकी व्यालशतसहस्रभीषणे निर्मानुषे तस्मिञ्शून्यारण्ये स्थितः। केन ते तत्रापि शरीररक्षा कृता। केन शरीरस्थितिः संपादिता। केन निद्रासुखदायि शयनीयमुपकल्पितम्। कस्त्वयि बुभुक्षिते तृषिते सुषुप्सति वा दुःखितः। ममोत्सङ्गमुत्सृज्य समानसुखदुःखा वधूरपि न पुत्रक,

त्वयोपात्ता। आगतमात्रस्यैव ते पितरमनुज्ञाप्यात्यर्थं वधूमुखमवलोकयिष्यामीति यन्मया चिन्तितम्, न केवलं तन्मे मन्दपुण्याया न संपन्नम्; परं तत्रापि वदनदर्शनं दुर्लभं भूतम्। वत्स, यत्र तेऽवस्थातुमभिरुचितम्, नयस्व तत्रैव मामपि पितरं विज्ञाप्य। त्वामपश्यन्ती न जीवामि। तात, त्वयाहं शैशवेऽपि नावमानिता। कुतस्तवेयमेकपद एवेदृशी निष्ठुरता जाता। जन्मनः प्रभृति न दृष्टमेव यस्य कुपितमाननम्, तस्य ते कुतोऽयमेवंविधो मय्यकस्मादेव कोपः। यदेवं परित्यज्य स्थितोऽसि। गतोऽप्यागच्छ। शिरसा प्रसादयामि त्वाम्। कोऽपरोऽस्ति मे। देशान्तरपरिचयान्मुक्तो नामास्मासु स्नेहः। क्षणमप्यनन्तरितदर्शनस्य चन्द्रापीडस्योपरि कथं तवेदृशी निःस्नेहता जाता। तात, न भद्रकं ते समापतितम्। सर्व एव सुखं स्थापनीयो गुरुजनः, दुःखं च स्थापितः। न जानाम्येवं कृत्वा किं त्वया प्राप्तव्यम्' इत्येतानि चान्यानि चान्तर्भवनगतां स्वयं देव्या विलासवत्या संस्थाप्यमानामपि मनोरमां विलपन्तीमश्रौषीत्।

तेन चातिकरुणेन तत्प्रलापविषेण निश्चेतनतामनीयत। कथं कथमपि सहजसत्त्वावष्टम्भेनैव संस्तम्भितात्मा, प्रविश्य पितुरपि लज्जमानो वदनमुपदर्शयितुम्, अधोमुख एव शुकनासेन सह प्रणम्य पितरम्, दूरत एवोपाविशत्। उपविष्टं च तं क्षणमिव दृष्ट्वा राजान्तर्बाष्पभरगद्गदेन ध्वनिनाभ्यधात् — 'वत्स चन्द्रापीड, जानामि ते स्वजीवितादपि समभ्यधिकां भ्रातुरुपरि प्रीतिम्। पीडा च सुखैकहेतोर्वल्लभजनादेवासंभाव्या या संभवति, तयैव हि न किंचिन्न क्रियते। तज्जन्मनः स्नेहस्य शीलस्य विनयाधानस्य च सर्वस्यैवानुचितमिमं

भ्रातुः सुहृदश्च ते वृत्तान्तमाकर्ण्य, त्वद्दोषमाशङ्कते मे हृदयम्' इति ।

एवंवादिनो नरपतेर्वचनमाक्षिप्य, युगपच्छोकामर्षाभ्यामन्धकारिताननः शुकनासोऽब्रवीत्—'देव, यदि चन्द्रमस्यूष्मा, महोदधौ वा शोषः, संभाव्यते ततो युवराजेऽपि दोषः । तत्किमेवमनिरूप्य तस्यानात्मज्ञस्य मित्रद्रुहः कृतघ्नस्य कृते कृतयुगावतारयोग्यमात्मनोऽपि गुणवन्तं चन्द्रापीडमेवं संभावयति देवः । न ह्यतः परमपरं कष्टतरं किंचिदपि पीडाकारणम्, यद्गुणेषु वर्तमानो दोषेषु संभाव्यते इतरजनेनापि, किं पुनर्गुरुजनेन । अपि च, जन्मनः प्रभृति देवस्य देव्या विलासवत्याश्चाङ्कलालनया यो न गृहीतः, तस्य मरुत इव दुर्ग्रहप्रकृतेश्चन्द्रापीडोऽपि किं करोतु । स्वयमेवोत्पद्यन्ते एवंविधाः शरीरसंभवा महाक्रमयः, सर्वदोषाश्रया महाव्याधयः । ये सकलङ्काः कृपाणा इव स्नेहेनैव पारुष्यं भजन्ते । सरागाः पल्लवा इव दिवसारूढ्यैवापरज्यन्ते । भूतिपरामृष्टा दर्पणा इवाभिमुख्येन सर्वं प्रतीपं गृह्णन्ति । ये च स्निग्धेष्वपि रूक्षाः, ऋजुष्वपि वक्राः, स्त्रीष्वपि शूराः, भृत्येष्वपि क्रूराः, दीनेष्वपि दारुणाः । येषां च विपरीतानां गुरव एव लघवः, नीचा एवोच्चैः, कुदृष्टिरेव सद्दर्शनम्, दौःशील्यमेव सुशीलता, अनृतमेव सत्यम् । येषां च क्षुद्राणां प्रज्ञा पराभिसंधानाय न ज्ञानाय, पराक्रमः प्राणिनामुपघाताय नोपकाराय, उत्साहो धनार्जनाय न यशसे, धनपरित्यागः कामाय न धर्माय । किं बहुना, सर्वमेव येषां दोषाय न गुणाय । तदसावपीदृश एव कोऽप्यपुण्यवानुत्पन्नः, यस्यैवं कुर्वतः 'मित्रमहं चन्द्रापीडस्य, कथं तस्य द्रोहमाचरामि' इति नोत्पन्नं

चेतसि। 'मातुरहमेवैको जीवितनिबन्धनम्, कथं मया विना वर्तिष्यते' इत्येतस्य नृशंसस्य हृदये नापतितम्। 'पिण्डप्रदो वंशसंतानार्थमहमुत्पादितः पित्रा, कथमननुज्ञातस्तेन सर्वपरित्यागं करोमि' इत्येतदपि यथाजातस्य न बुद्धौ संजातम्। तदेवमसत्पथप्रवृत्तेन दुर्दर्शमदृष्टं तावन्न नाम कुदृष्टिना दृष्टम्। दृष्टमपि येन न दृष्टम्, तस्याज्ञानतिमिरान्धस्य किं क्रियताम्। अपरम् — असौ तिर्यञ्चमहता यत्नेन शुक इव पाठितः पुष्टश्च देवेन। अथवा विनोददानात्तिरश्चामपि सफल एव शिक्षणायासो भवति। तेऽपि पोषिताः पोषितरि स्नेहमाबध्नन्ति। तेषामपि सहजन्मस्नेहो मातापित्रोरुपरि दृश्यत एव। अपि च, ईदृशाचरितेन तेनाप्यवश्यमेव कस्यांचित्तिर्यग्योनौ पतितव्यम्। सर्व एव ह्यनाक्षिप्तचेताः प्रवर्तते स्वहिताय परहिताय च। तस्य तु पुनरस्मानेवं दुःखं स्थापयतो न स्वहितं नापि च परहितम्। किमनेनैवमात्मद्रुहा कृतमिति मतिरेव तावन्न बोधपदवीमवतरति। सर्वथा दुःखायैवास्माकं तस्य पापकर्मणो जन्म' इत्युक्त्वा निश्वसन्नेवावतस्थे।

• तदवस्थं च तं तारापीडः प्रत्युवाच—'एतत्खलु प्रदीपनाग्नेः प्रकाशनम्, व्यजनानिलैरतिवर्धनं प्रभञ्जनस्य, यदस्मद्विधैः परिबोधनमार्यस्य। तथापि प्राज्ञस्यापि सत्त्ववतोऽप्यवश्यं दुःखानिपातेन विशुद्धमपि वर्षसलिलेन सर इव मानसं कलुषीक्रियते सर्वस्य। येन ब्रवीमि। अन्यदस्मत्तो लोकवृत्तमार्य एव सुतरां वेत्ति। किमस्ति कश्चिदसावियति लोके, यस्य निर्विकारं यौवनमतिक्रान्तम्। यौवनावतारे हि शैशवेनैव सह गलति गुरुजनस्नेहः। दोर्द्वयेनैव सह स्थूलतामापद्यते धीः। आकारेणैव सहाविर्भवन्ति हृदयाद्विकाराः। विकृतं च

मोहान्धं चेतो भ्राम्यदवश्यमेव स्खलति। स्खलिते च चेतसि, तल्लग्ना पतत्येव लज्जा। त्रपावरणशून्ये च हृदि प्रविश्य पदं कुर्वन्केन वा निवारितो दुर्निवारः सर्वाविनयहेतुः कुसुमधन्वा। तन्मोहविषयविषमहार्हौ तारुण्यावतारे सर्वस्यैव स्खलितमापतति। किमेवमार्येण लालनीयस्य पालनीयस्य शिशुजनस्योपर्यावेशो गरीयान्गृहीतः, यदनुचितमपत्यस्नेहस्याक्रोशगर्भमेवमुक्तम्। स्वप्नायमानानामपि यद्गुरूणां मुखेभ्यो निष्क्रामति शुभमशुभं वा, शिशुषु तदवश्यं फलति। गुरवो हि दैवतं बालानाम्। यथैवाशिषो गुरुजनवितीर्णा वरतामापद्यन्ते, तथैवाक्रोशाः शापताम्। तद्वैशम्पायनमुद्दिश्य कोपावेशादेवमतिपरुषमभिदधत्यार्ये, महती मे चेतसः पीडा समुत्पन्ना। स्वयमारोपितेषु तरुषु तावदुत्पद्यते स्नेहः। किं पुनरङ्कसंभवेष्वपत्येषु। तदुत्सृज्यतामयममर्षवेगो वैशम्पायनस्योपरि। विरूपकं तु तेन न किंचिदप्याचरितम्। सर्वपरित्यागं कृत्वा स्थित इत्येतदपि कारणमविज्ञाय किमेवं दोषपक्षे निक्षिपामः। कदाचिद्गुणीभवत्येवमयमविनयनिष्पन्नो दोष एव। आनीयतां तावदसौ। बुध्यामहे किमर्थमयमेवंविधस्तस्य वयसोऽनुचितोऽपि संवेग उत्पन्नः। ततो यथायुक्तं विधास्यामः'।

इत्युक्तवति तारापीडे, पुनः शुकनासोऽभ्यधात् — 'अत्युदारतया वत्सलत्वाच्चैवमादिशति देवः। अन्यदतः परं किमिवास्य विरूपकं भवेत्, यद्युवराजमुत्सृज्य क्षणमप्यन्यत्रावस्थानमात्मेच्छया चेष्टितम्' इत्युक्तवति शुकनासे, चन्द्रापीडः शनैः शनैः शुकनासमवादीत् — 'आर्य, यद्यपि निरुक्तितो वेद्मि — न मदीयेन दोषेणा नागतो वैशम्पायन इति। तथापि तातेन संभावितमेव। कस्य

वापरस्य संभावना नोत्पन्ना। मिथ्यापि तत्तथा, यथा गृहीतं लोकेन, विशेषतो गुरुणा। तदस्या दोषसंभावनायाः प्रायश्चित्तमार्यो दापयतु मे वैशम्पायनानयनाय गमनाभ्यनुज्ञां तातेन। नान्यथा मे दोषशुद्धिर्भवति। न च तुरंगमैर्गच्छतो मे दृष्टायां भूमौ स्वल्पोऽपि गमनपरिक्लेशः। अनुपदमेव स्कन्धावारमादायागच्छतीत्यमुना हेतुना विना तेनागतोऽहम्। अन्यथा जन्मनः प्रभृति कदा मया गतं स्थितं क्रीडितं हसितं पीतमशितं सुप्तं प्रबुद्धमुच्छ्वसितं वा विना वैशम्पायनेन। यच्च श्रुत्वा तस्मादेव प्रदेशान्न गतोऽस्मि, तन्मा तेनैव तुल्यो भूवमिति। तदप्रतिगमनदोषाद्रक्षतु मामार्यः'।

इत्यभिहितवति चन्द्रापीडे, 'गमनाय विज्ञापयति युवराजः, किमाज्ञापयति देवः' इति शनैः शनैः पृष्टश्च शुकनासेन, किंचिदिव ध्यात्वा तारापीडः प्रत्यवादीत्—'आर्य, मया ज्ञातमेतेष्वेव दिवसेषु वत्सस्य वधूं द्रक्ष्यामीति। तावदयमपरोऽन्तर्हिताशापथो वैशम्पायनवृत्तान्तो विलोमप्रकृतिना विधात्रान्तरा पातितः। यथा चायुष्मताभिहितम्, एवमेवैतत्। न तमन्यः शक्तोत्यानेतुम्, न च तेन विनायमत्र स्थातुम्। तदवश्यमेव तावन्निस्तरितव्यो व्यसनार्णवोऽमुना पोतेन। वैशम्पायनप्रत्यानयनाय चावश्यं देव्यपि विलासवती विसर्जयिष्यत्येवैनमिति निश्चयो मे। तद्यातु। किंत्वतिदूरं वत्सेन गन्तव्यम्। तद्गणकैः सहादरादार्यो दिवसं लग्नं च गमनायास्य निरूपयतु। संविधानं च कारयतु' इत्येतदभिधाय, 'वत्स, गच्छ, त्वमेव प्रविश्याभ्यन्तरम्, मनोरमासहिताया मातुरावेदयात्मगमनवृत्तान्तम्' इत्यादिश्य, स्वभवनमयासीत्।

चन्द्रापीडस्तु प्रविश्य कृतनमस्कारो मातुः समीपे समुपविश्य, मनोरमामाश्वास्यावादीत्—'अम्ब, समाश्वसिहि। वैशम्पायनानयनाय तातेन मे गमनमादिष्टम्। तत्कतिपयदिवसान्तरितवैशम्पायनाननदर्शनोत्सुकं मामविकल्पं विसर्जय त्वम्'। सा त्वेवमभिहिता प्रत्युवाच—'तात, किमात्मगमनवचसा मां समाश्वासयसि। कः खलु मे त्वयि तस्मिंश्च विशेषः। तदेकधा तमेकं न पश्यामि कठिनहृदयम्। त्वयि पुनर्गते, यदपि तस्यादर्शने जीवितनिर्गमप्रतिबन्धहेतुभूतं त्वद्दर्शनम्, तदपि दूरीभवति। तन्न गन्तव्यं वत्सेन। एकेनापि हि युवयोरावां पुत्रवत्यौ। अपि नागतो नामासौ निष्ठुरात्मा' इत्युक्तवत्या मनोरमायाम्, विलासवती धीरमुवाच—'प्रियसखि, तत्र मम चैवमेतत्, यथा त्वयोक्तम्। अयं पुनर्वैशम्पायनेन विना कं पश्यतु। तदास्ताम्। किमेनं निवारयसि। वारितेनाप्यनेन नैव स्थातव्यम्। मन्ये च, पित्राप्ययमेतदेवाकलय्य गमनायानुमोदितः। तद्यातु। वरमावयोः कतिपयदिवसान् अनयोरप्यदर्शनकृतान्क्लेशाननुभवितुम्, न पुनरस्य वैशम्पायनाननानवलोकनदुःखदीनं दिने दिने वदनमीक्षितुम्। तदुत्तिष्ठ, गच्छावो गमनसंविधानाय वत्सस्य चन्द्रापीडस्य'।

इत्यभिदधत्येव मनोरमां हस्ते गृहीत्वोत्थाय, चन्द्रापीडेनानुगम्यमाना निजावासमयासीत्। चन्द्रापीडोऽपि मातुः समीपे गमनालापेनैव क्षणमिव स्थित्वा गृहमगात्। तत्र चापनीतसमायोगो गमनायोत्ताम्यता हृदयेन गणकानाहूय रहस्याज्ञापितवान्—'यथा विना परिलम्बेन मे गमनं भवति, तथा भवद्भिरार्यशुकनासाय पृच्छते तातायं वा दिनमावेदनीयम्' इति। एवमादिष्टास्ते व्यज्ञापयन्—'देव,

यथा सर्व एव ग्रहाः स्थिताः, तथास्मन्मतेन देवस्य गमनमेव वर्तमाने न शुस्यते । अपरमपि, कर्मानुरोधाद्राजेच्छैव कालः । तत्र न कार्यमेवाहर्निरूपणया । राजा कालस्य कारणम् । यस्यामेव वेलायां चित्तनिर्वृतिः, सैव वेला सर्वकार्येषु' इति विज्ञापिते मौहूर्तिकैः, पुनस्तानब्रवीत्—'तातेनैवमादिष्टमिति ब्रवीमि । अन्यत्, आत्ययिकेषु कार्येषु कार्यपराणां प्रतिक्षणोत्पादिषु च दिवसनिरूणैव कीदृशी । तत्तथा कथयत, यथा श्व एव गमनं भवेत्' इत्यभिधाय, निर्वर्तितशरीरस्थितिः, तं दिवसमेकां च यामिनीं कथं कथमप्यस्थात् ।

अथास्तमुपगतवति तेजसां पत्यौ, संध्यानलस्फुलिङ्गनिकर इव स्फुरति तारागणे, उदयगिरिवर्तिनि नक्षत्रनाथे, प्रस्थानमङ्गले प्रणामायोपगतं चन्द्रापीडं विलासवती मन्युरागावेगगद्गदिकोपरुध्यमानाक्षरमवादीत्—'तात, युज्यते ह्यङ्कलालितस्य गर्भरूपस्य प्रथमगमने गरीयसी हृदयपीडा । मम पुनर्नेदृशी प्रथमगमनेऽपि ते पीडा समुत्पन्ना, यादृशी तव गमनेनाधुना । दीर्यते इव मे हृदयम् । निर्यान्तीव प्राणाः । न किंचित्समादधाति धीः । सर्वमेव शून्यं पश्यामि । धृतोऽपि बलादागच्छति मे बाष्पोत्पीडः । मुहुर्मुहुः समाहितापि मङ्गलसंपादनाय ते चलति मतिः । किं निमित्तं चेयमीदृशी मे हृदयपीडेत्येतदपि न वेद्मि—किं बहुभ्यो दिवसेभ्यः कथमप्यागतो मे वत्सो झटित्येव पुनर्गच्छतीति, उत वैशम्पायनवृत्तान्तादात्मन एव दुःखिततयेति । न चैवंविधयापि पीडया वैशम्पायनानयनाय गच्छतस्ते गमनं निवारयितुं पारयति वाणी । हृदयं पुनर्नेच्छत्येव त्वदीयं गमनम् । तदीदृशीं मे पीडां विज्ञाय यथा पुरा स्थितम्, न तथा क्वचि-

दासङ्गमावध्यातिदीर्घकालमायुष्मता स्थातव्यम्। अस्य चार्थस्य कृते साञ्जलिबन्धेन शिरसाभ्यर्थये वत्सम्' इत्यादिशन्तीं स्वमातरं व्यजिज्ञपत्—'अम्ब, तदा दिग्विजयप्रसङ्गात्स्थितम्। अधुना पुनरयमेव कालक्षेपः, यावत्तमुद्देशं पर्यापनामि। तत्पुनश्चिरागमनकृता न भावनीया मनागपि हृदये पीडा त्वया' इत्येवं विज्ञप्ता गाढं सुचिरमालिङ्ग्य, गच्छद्भिरिव प्राणैः कृच्छ्रान्मुमोच तं माता।

मुक्तश्च मात्रा प्रविश्य पितुर्वासभवनम्, ननाम दूरस्थित एव पितुः पादौ। अथ तथा प्रणतमालोक्य तम्, पिता अन्तःक्षोभावेगविक्षिप्ताक्षरमवादीत्—'वत्स, पित्राहं दोषेषु संभावित इत्येषा मनागपि मनसि वत्सेन दुःखासिका न कार्या। विनयाधानात्प्रभृति सम्यक्परीक्षितोऽस्यस्माभिः। परीक्ष्य च गुणगणैरवाधिगम्यो राज्यभारस्त्वय्यारोपितः, न तनयस्नेहादेव। राज्यं हि नामैतत् नामहासत्त्वे, नाविक्रान्ते, नामहोत्साहे, नाशरण्ये, नाब्रह्मण्ये, नाकृपालौ, पदमेवादधाति। यः खलु समग्रैर्गुणैराकृष्य बलात्प्रतिबन्धमस्य चञ्चलप्रकृतेः कर्तुं समर्थः, तत्रास्ते। तदनेनैव बोद्धव्यमिदं वत्सेन—नास्ति मयि दोष इति। अपि च, संप्रति कस्मिन्भारमवक्षिप्याणुमपि दोषमाचरसि। त्वयैव सकललोकानुरञ्जने यतितव्यम्। गतः खलु कालोऽस्माकम्। अस्माभिरस्खलितैश्चिरं पदे स्थितम्। न पीडिताः प्रजा लोभेन। नोद्वेजिता गुरवो मानेन। न हतः परलोकः कामेन। राजधर्मोऽनुरुद्धः, न स्वरुचिः। वृद्धाः समासेविताः, न व्यसनानि। सतां चरितान्यनुवर्तितानि, नेन्द्रियाणि। वृत्तं रक्षितम्, न शरीरम्। अकार्यपरिहारात्कार्यानुष्ठानाच्चोपार्जितः परोऽपि लोक इति चेतसि मे। त्वज्जन्मना

च कृतार्थ एवास्मि। तदयमेव मे मनोरथः—दारपरिग्रहात्प्रतिष्ठिते त्वयि सकलमेव मे राज्यभारमारोप्य, जन्मनिर्वाहलघुना हृदयेन पूर्वराजर्षिगतं पन्थानमनुयास्यामीति। अस्य च मेऽतर्कित एवायमग्रतः प्रतिरोधको वैशम्पायनवृत्तान्तः स्थितः। मन्ये च, न संपत्तव्यमेवानेन। अन्यथा क्व वैशम्पायनः। क्व चैवंविधमस्य स्वप्नेऽप्यसंभावनीयं समाचेष्टितम्। तद्गतेनापि तथा कर्तव्यं वत्सेन, यथा न चिरकालमेव मे मनोरथोऽन्तर्हृदय एव विपरिवर्तते' इत्यभिधाय, ताम्बूलमर्पयित्वा व्यसर्जयत्।

चन्द्रापीडस्तु निर्गत्य शुकनासभवनमयासीत्। तत्र च तनयचिन्तापरीतमुन्मुक्तमिवेन्द्रियैः शुकनासम् अविरताश्रुपातोपहतमुखी च मनोरमा प्रणम्य, अग्रतो ढौकितमपि कृतापमर्पणमनाविष्कृतगमनोत्साहं दीनमिन्द्रायुधमारुह्य, रयेणैव निरगान्नगर्याः।

निर्गत्य च सिप्रातटे तत्प्रस्थानमङ्गलावस्थानायोपकल्पितं कायमानमप्रविश्य, गव्यूतित्रितयमिव गत्वा, सुलभपर्यायवसे प्रदेशे निवासमकल्पयत्। उत्ताम्यता हृदयेनाप्रभातायामेव यामिन्यामुत्थाय, किमपि किमपि मनसा चिन्तयन्, अचेतितक्षुत्पिपासातपश्रमोजागरव्यथः, दिवा रात्रौ चावहत्।

एवं च वहतोऽप्यस्य दवीयस्तयाध्वन., अवेपथ एव, कालसर्पो वर्त्मनः, मदागमो मकरध्वजकुञ्जरस्य, आशुगमनविघ्नकारी बभूव जलदकालः।

तत्र च प्रथममस्य चेतोहारिभिर्मूर्च्छावेगैरन्धकारतामनीयन्त दश दिशः, ततो जलधरैः। अग्रतः समुत्प्लुतेन चेतसा क्वाप्यगम्यत,

पृष्ठतो हंसैः । पूर्वं तुलितनीलोत्पलवनकान्ति नयनयुगलमस्य सलिलं समुत्ससर्ज, चरममम्भोमुचां वृन्दम् । अपि च, दुस्तरैर्नदीपूरैरेव सहावर्धन्त मन्मथोन्माथाः । वर्षजलविलुलितैः कमलाकरैरेव सह ममज्ज कादम्बरीसमागमप्रत्याशा । धारायासहै: कन्दलैरेव सहाभिद्यत हृदयम् । ततश्च विततेन स्थलीषु, कलकलेनाम्बुषु, पटुना पर्वततटेषु, उल्बणेन तालीवनेषु, यथाधारापतनमाकर्ण्यमानेन धारारवेणोत्कलिकाकलितः, न रात्रौ, न दिवा, न ग्रामे, नारण्ये, न वर्त्मनि, नावासे, न वहन्, न तिष्ठन्, न वैशम्पायनस्मरणे, न कादम्बरीसमागमानुध्याने, न कथंचिदपि, न क्वचिदपि, निर्वृतिमवाध्यगच्छत् ।

अनधिगतनिर्वृतिश्च धीरस्वभावोऽपि प्रकृतिमेवोत्ससर्ज । प्लावितसकलधरातलैर्धाराजलैरप्यशोष्यत । द्योतितदशदिशा शतह्रदालोकेनापि मूर्च्छान्धकारेऽक्षिप्यत । तथापि सकलजगज्जीवनहेतुनापि जीवितसंदेहदोलामारोपितो जलदकालेन, निरुद्धास्वपि जलदकालेनैवाशुगमनविघ्नभूतास्वाशासु, कादम्बरीसमागमाशा सुतरां नारुध्यतास्य, यया तादृशेऽपि प्रावृट्काले कलामात्रकृतपरिलम्बोऽनीयत तं पन्थानम् । धाराहतिविकूणिताक्षेण च मुहुर्मुहुर्वलितानमिताननेनापचीयमानबलजवोत्साहेन वाजिसैन्येनानुगम्यमानः, जीवितसंधारणाय यथातथा निर्वर्तिताशनमात्रकः, दिवसमेव केवलमवहत् ।

वहंश्च त्रिभागमात्रावशिष्टेऽध्वनि निवर्तमानं मेघनादमद्राक्षीत् । दृष्ट्वा च दूरत एव कृतनमस्कारं तमप्राक्षीत्—'तिष्ठतु तावत्पुरस्तात्पत्रलेखागमनवृत्तान्तप्रश्नः । वैशम्पायनवृत्तान्तमेव तावत्पृच्छामि । अपि दृष्टस्त्वयाच्छोदसरसि वैशम्पायनः? पृष्टो वावस्थानकारणम्?

स्मरति वास्माकम्? पृष्टोऽसि वानेन किंचिन्मदीयम्? उपलब्धो वाभिप्रायः? उत्पन्नो वालापो युवयोः? मातापित्रोर्वा संदिष्टं किंचित्? परिबोधितो वा त्वयागमनाय? आवेदितं वास्मदीयमागमनम्? नापयास्यति वा तस्मात्प्रदेशात्? ग्रहीष्यति वास्मदनुनयम्? आगमिष्यति वा पुनर्मया सह? किं कुर्वन्दिवसमास्ते? को वा विनोदोऽस्य तिष्ठतः?" इति ।

स त्वेवं पृष्टो व्यज्ञपयत् — "देव, देवेन तु 'वैशम्पायनमालोक्य, अनुपदमेव तुरंगमैरागत एवाहम्' इत्यादिश्य विसर्जितोऽहम् । अच्छोदसरसः प्रतीपं वैशम्पायनो गत इत्येपान्तरा वार्तैव नोपजाता। चिरयति च देवे जलदसमयारम्भमालोक्य, 'कदाचिदेतेषु दिवसेषु देवेन तारापीडेन कृतप्रयत्नोऽपि न मुच्यत एवागन्तु देवश्चन्द्रापीडः । त्वया चैकाकिना न स्थातव्यमत्रास्यां भूमौ । परागतप्रायाश्च वयम् । तन्निवर्तस्वास्मादेव प्रदेशात्' इत्यभिधाय, पत्रलेखया केयूरकेण च त्रिचतुरैः प्रयाणकैरप्राप्त एवाच्छोदं यावद्बलान्निवर्तितोऽस्मि" इति ।

एवमावेद्य विरतवचनं तं पुनरपृच्छत् 'किमाकलयसि, अद्यतनेनाह्ना यावत्परापतिता पत्रलेखा, न' इति । स तु व्यज्ञपयत्-'देव, यद्यन्तरा कश्चिदन्तरायो न भवति विलम्बकारी, तदा विना संदेहेन परापतति। एवमवगच्छति मे हृदयम्' इत्युक्तवति मेघनादे, घनसमयवर्धिताभोगमकरध्वजार्णवमध्यपातिनीं स्वानुमानात्कादम्बरीमुत्प्रेक्ष्योत्प्रेक्ष्य विक्लवीभवतः पर्यावर्तन्तेवास्य जलधराः कालपुरुषैः, केतकामोदो विषपरिमलेन, कुटजतरवः कृतान्तहासैः, अपि च, शरीरेऽपि बलं क्षामतया, कान्तिर्वैवर्ण्येन, धैर्यं विषादेन, अङ्गान्यसहतया, करणान्यपाटवेन, सर्व-

मेवारत्या । दिवसैश्चोल्लिख्यमानमिवानवरतवाहिनाश्रुपूरप्रवाहेण स्वल्पावशेषम्, संकल्पलिखितेन निर्विशेषवृत्तिना कादम्बरीशरीरेणेव सह कण्ठलग्नं कथंकथमपि जीवितं धारयन्, उपहतं प्रावृषा, दृष्टपूर्वमप्यदृष्टपूर्वमिवादत्तदृष्टिसुखम्, तदेवाच्छोदमुपाहितद्विगुणदुःखमाससाद।

आसाद्य चोपसर्पन्नेव सर्वाश्ववारानादिदेश — 'कदाचिदसौ वैलक्ष्यादस्मानालोक्यापसर्पत्येव। तच्चतुर्ष्वपि पार्श्वेष्ववहिता भवन्तु भवन्तः' इति। आत्मनापि तुरगगत एव खिन्नोऽप्यखिन्न इव विचिन्वन् समन्ताद्बभ्राम। भ्राम्यंश्च यदा न क्वचिदपि किंचिदवस्थानचिह्नमप्यद्राक्षीत्, तदा चकार चेतसि — 'नियतमसौ पत्रलेखासकाशान्मदागमनमुपलभ्य प्रथममेवापक्रान्तः, येनावस्थानचिह्नमात्रं कथमपि नोपलक्ष्यते। वैशम्पायनमदृष्ट्वास्मात्प्रदेशात्पदमपि गन्तुं पादावेव नोत्सहेते मे। सर्वथा विनष्टोऽस्मि। न दृष्टा देवी कादम्बरी, नापि वैशम्पायनः' इत्येवमुत्पन्ननिश्चयोऽपि, अपरिच्छेद्यस्वभावत्वात्प्रत्याशायाः, 'कदाचिदस्य वृत्तान्तस्याभिज्ञा महाश्वेतापि भवत्येव। तत्तां तावत्पश्यामि। ततो यथायुक्तं प्रतिपत्स्ये' इत्यारोप्य हृदये, महाश्वेताश्रममुपजगाम। प्रविश्य च गुहाद्वार एव धवलशिलातले समुपविष्टामधोमुखीं कथंकथमपि तरलिकया विधृतशरीरां महाश्वेतामपश्यत्। दृष्ट्वा च तां तादृशीमस्योदपादि हृदये — 'मा नाम देव्याः कादम्बर्या एव किमप्यनिष्टमुत्पन्नं भवेत्, येनेयमीदृश्यवस्था हर्षहेतावपि मदागमनेऽनुभूयते महाश्वेतया' इत्याशङ्काभिन्नहृदयोऽयमुड्डीनैरेव प्राणैः पदे पदे स्खलन्निव पतन्निव प्रोद्बाष्पविषण्णवदनः, 'किमेतत्' इति तरलिकामपृच्छत्।

अथानुपसंहृतमन्युवेगापि गद्गदिकावगृह्यमाणकण्ठा महाश्वेतैव प्रत्यावदीत्— 'महाभाग, किमियमावेदयति वराकी । श्रूयताम्— केयूरकाद्ववद्गमनमाकर्ण्य, विदीर्णमानसा 'न मया चित्ररथस्य मनोरथः पूरितः । न गृहाभ्यागतस्य चन्द्रापीडस्य प्रियमनुष्ठितम् । न चापि हृदयवल्लभसमागमनिर्वृता प्रियसखी कादम्बरी वीक्षिता' इत्युत्पन्नानेकगुणवैराग्या, पुनः कष्टतरतपश्चरणायात्रैवायाता । तावदत्र महाभागस्यैव तुल्याकृतिम्, उन्मुक्तमिवान्तःकरणेन ब्राह्मणयुवानमपश्यम् । स तु मामुपसृत्यानन्यदृष्टिरदृष्टपूर्वोऽपि प्रत्यभिजानन्निव, सुचिरमालोक्याब्रवीत्—'वरतनु, सर्व एव हि जगति जन्मनो वयस आकृतेर्वा सदृशमाचरन्न वचनीयतामेति । तव पुनरेकान्तवामप्रकृतेर्विधेरिव विसदृशानुष्ठाने कोऽयं प्रयत्नः । यदियमक्लिष्टमालतीकुसुमसुकुमारा मालेव कण्ठप्रणयैकयोग्या तनुरनुचितेनामुना कष्टतरतपश्चरणपरिक्लेशेन म्लानिमुपनीयते । जातस्य हि रूपगुणविहीनस्यापि जन्मोपनतानि जीवलोकसुखान्यनुभूय शोभते परत्रसंबन्धी तपश्चरणपरिक्लेशः; किं पुनराकृतिमतो जनस्य । तद्दुःखयति मामस्यास्ते स्वभावसरसायास्तनोस्तपःपरिक्लेशः । यदि च त्वादृशी जीवलोकसुखेभ्यः पराङ्मुखी तपसा क्लेशयत्यात्मानम्, तदा वृथा वहति धनुरधिज्यं कुसुमकार्मुकः' ।

अहं तु तं वदन्तमपि 'कस्त्वम्, कुतो वा समायातः, किमर्थं वा मामेवमभिदधासि' इत्यपृष्ट्वैवान्यतोऽगच्छम् । गत्वा च देवार्चनकुसुमान्याचिन्वती, तरलिकामाहूयाब्रवम् — 'तरलिके, योऽयं युवा कोऽपि ब्राह्मणाकृतिः, अस्यावलोकयतो वदनश्चान्यादृश एवाभिप्रायो

मयोपलक्षितः। तन्निवार्यतामयम्, यथा पुनरत्र नागच्छति। अथ निवारितोऽप्यागमिष्यति, तदावश्यमेवास्याभद्रकं भविष्यति' इति। स तु निवार्यमाणोऽपि नास्मार्दिवानुबन्धनम्। अतीतेषु केषुचिद्दिवसेषु, एकदा गाढायां यामिन्याम्, चन्द्रमसि निहितदृष्टिः, 'अपि नामायममिरमृतवर्षिभिरखिलजगदाह्लादकारिभिः करैश्चन्द्रमास्तमपि हृदयवल्लभं मे वर्षेत्' इत्याशंसाप्रसङ्गेन देवस्य सुगृहीतनाम्नः पुण्डरीकस्य स्मरन्ती, जाग्रत्येवातिष्ठम्।

अथ निभृतपदसंचरणम्, आचरणादुत्कण्टकम् अनवरतपतितमदनशरशल्यनिकरनिचितमिव शरीरमुद्वहन्तम्, दूरीकृतं परलोकभीत्या, उन्मादादापतन्तम्, दूरतोऽपि दिवसनिर्विशेषेण चन्द्रातपेन विभाव्यमानं तमेव युवानमद्राक्षम्।

दृष्ट्वा च तं तादृशम्, निस्पृहाप्यात्मनि परं भयमुपगतवती चेतस्यचिन्तयम्—'अहो कष्टमापतितम्। यद्ययमुन्मादादागत्य पाणिनापि स्पृशति माम्, तदा मयेदमपुण्यहतं शरीरमुत्स्रष्टव्यम्। तच्चिरादेवस्य पुण्डरीकस्य पुनर्दर्शनप्रत्याशया दुःखोत्तरमप्यङ्गीकृतं व्यर्थतां मे यातं प्राणसंधारणम्' इति।

स त्वेवं चिन्तयन्तीमेव मामुपसृत्याब्रवीत्—'चन्द्रमुखि, हन्तुमुद्यतो मामयं कुसुमशरसहायश्चन्द्रमाः। तच्छरणमागतोऽस्मि। रक्ष मामशरणमनाथमार्तमप्रतीकारक्षममात्मना त्वदायत्तजीवितम्। शरणागतपरित्राणं हि तपस्विनामपि धर्म एव। तद्यदि मामात्मप्रदानेन नात्र संभावयसि, तदा हतोऽहमाभ्यां कुसुमशरशिशिरकराभ्याम्' इति। अहं तु तदाकर्ण्य वेपमानात्मानमप्यचेतयमाना, क्रोधावेगरूक्षा-

क्षरमवदम्—'आः पाप, कथमेवं गदतो मामुत्तमाङ्गे ते न निपतितं वज्रम्, अवशीर्णा वा न सहस्रधा जिह्वा। मन्ये च, न सन्त्येव तेऽस्मिञ्शरीरे सकललोकशुभाशुभसाक्षिभूतानि पञ्च महाभूतानि; येनैवं वदन्नाग्निना भस्मीकृतोऽसि, न वायुना हृतोऽसि, नाम्भसा प्लावितोऽसि, न धरित्र्या रसातलं प्रवेशितोऽसि, नापि तत्क्षणमेवाकाशेनात्मनिर्विशेषतां नीतोऽसि। येनैव खलु हतविधात्रा केनाप्युपदर्शितमुखरागः स्वपक्षपातमात्रप्रवृत्तिरनिरूपितस्थानास्थानवादी शुक इव वक्तुमेवं शिक्षितः, तेनैव किमु तस्यामेव जातौ न निक्षिप्तोऽसि; येनैकान्तहासहेतुरेवं वदन्नपि न क्रोधमुत्पादितवानसि। त्वदुक्ते दुःखिताहं ते संविभागमिमं करोमि, येनात्मवचनानुरूपां जातिमापन्नो नैवास्मद्विधाः कामयसे' इत्युक्त्वा, चन्द्राभिमुखी भूत्वा कृताञ्जलिः पुनरवदम् — 'भगवन् परमेश्वर लोकपाल, यदि मया देवस्य पुण्डरीकस्य दर्शनात्प्रभृति मनसाप्यपरः पुमान्न चिन्तितः, तदानेन मे सत्यवचनेनायमलीककामी मदुदीरितायामेव जातौ पततु' इति। स च मे वचसोऽस्यानन्तरमेव छिन्नमूलस्तरुरिवाचेतनः क्षितावपतत्। अतिक्रान्तजीवितेऽस्मिन्, कृताक्रन्दात्तत्परिजनाच्छ्रुतवती — यथा — असौ महाभागस्यैव मित्रं भवति' इत्युक्त्वा च त्रपावनम्रमुखी महीं महीयसाश्रुवेगेन तूष्णीमेवाप्लावितवती।

चन्द्रापीडस्य तु तदाकर्ण्य 'भगवति, कृतप्रयत्नायामपि भगवत्याम्, अपुण्यभाजास्मिञ्जन्मनि मया न प्राप्तं देव्याः कादम्बर्याश्चरणपरिचर्यासुखम्। तज्जन्मान्तरेऽपि वा भगवती संपादयित्री भूयात्' इति गदत एव स्वभावसरसं हृदयमस्फुटत्।

अथ महाश्वेतायाः शरीरमुत्सृज्य संभ्रमप्रतिपन्नचन्द्रापीडशरीरायाम् 'भर्तुदारिके, किं लज्जया। पश्य तावत्, अन्यथैव कथमप्यास्ते देवश्चन्द्रापीडः। भग्नेवास्य ग्रीवा न मूर्धानं धारयति। विचालितोऽपि न किंचिच्चेतयते। नोच्छ्वसिति हृदयेन। हा देव चन्द्रापीड चन्द्राकृते कादम्बरीप्रिय, क्वेदानीं त्वया विना गम्यते' इत्युक्त्वार्तवचसि तरलिकायाम्, तिर्यगाभुग्नचन्द्रापीडमुखनिहितनिश्चलस्तब्धदृष्टिनिश्चेष्टायां महाश्वेतायाम्, 'आः पापे दुष्टतापसि, किमिदं त्वया कृतम्। अपाकृताखिलजगत्पीडस्य तारापीडस्य कुलमुत्सादितम्। अनाथीकृताः प्रजाः सहास्माभिः। कस्य वदनमीक्षता लक्ष्मीः। कोऽवलम्बनं भवतु भूमेः। कथं कथावशेषीभूतोऽसि। धीरस्यापि ते कथं कातरस्येव शुचा भिन्नं हृदयम्। देव, प्रसीद, प्रतिपद्यस्व प्राणान्। परित्यज्य च सर्वान्, एकाकी क्व प्रस्थितोऽसि' इत्युक्तवत्यारटति परिजने, चन्द्रापीडवदननिवेशितदृशि दीनतरहेषारवकृताक्रन्दे तुरंगमतां मुमुक्षतीवेन्द्रायुधे, पत्रलेखानिवेदितचन्द्रापीडागमना, व्याजीकृत्य महाश्वेतादर्शनं मातापित्रोः पुरः प्रतिपन्नशृङ्गारवेषाभरणा, पुरः केयूरकेणोपदिश्यमानमार्गा, पत्रलेखाहस्तावलम्बिनी, मदलेखया सह कृतालापैरचेतितागमनखेदा, कादम्बरी चन्द्रापीडदर्शनायोत्ताम्यन्ती, तत्रैवाजगाम।

आगम्य चोद्धृतामृतमिव रत्नाकरम्, उत्खातकर्णिकमिव कमलम्, उन्मुक्तजीवितं चन्द्रापीडमद्राक्षीत्। दृष्ट्वा च तम्, सहसा 'हा हा किमिदम्' इत्यधोमुखी धरातलमुपयान्ती कथंकथमपि मुक्ताक्रन्दया मदलेखयाधार्यत। पत्रलेखा पुनरुन्मुच्य कादम्बरीकरतलम्, अचेतना

क्षितिमुपागमत्। चिराच्च लब्धसंज्ञापि कादम्बरी तथैव निश्चलस्तब्ध दृष्टिः, स्तम्भितेव निष्प्रयत्ना निश्वसितुमपि विस्मृता, चन्द्रापीडवदन-समर्पिताक्षी, स्त्रीस्वभावविरुद्धेन चेतसा तस्थौ।

तथावस्थितां च तामुन्मुक्तार्तनादां सपादपतनं मदलेखाब्रवीत्—'प्रियसखि, प्रसीद, उत्सृजेमं मन्युसंभारमारटन्ती। बाष्पमोक्षेणामुच्य-मानेऽस्मिन्, नियतमतिभारोत्पीडितं तटाकमिव सरसमृदु सहस्रधा स्फुटति ते हृदयम्। अपेक्षस्व देवीं मदिरा देवं च चित्ररथम्। त्वया विना कुलद्वयमपि नास्ति' इत्युक्तवतीं मदलेखां कादम्बरी विहस्या-ब्रवीत्—'अय्युन्मत्तिके, कुतोऽस्य मे वज्रसारकठिनस्य हतहृदयस्य स्फुटनम्। यन्नालोक्यैव सहस्रधा स्फुटितम्। अपि च, या जीवति, तस्याः सर्वमिदम्— माता पिता बन्धुरात्मा सख्यः परिजन इति। मया पुनर्म्रियमाणया जीवितभूतं कथंकथमपि समासादितमिदं प्रियत-मशरीरम्, यज्जीवदजीवद्वा संभोगेनानुमरणेन वा द्विधापि सर्वदुःखा-नामेवोपशान्तये। तत्किमिति देवेनागच्छता मदर्थं प्राणाश्चोत्सृजता सुदूरमारोपितं गुरुतां च नीतमात्मानमश्रुपातमात्रकेण लघूकृत्य पात-यामि। कथं स्वर्गगमनोन्मुखस्य देवस्य रुदितेनामङ्गलं करोमि। कथं वा पादधूलिरिव पादावनुगन्तुमुद्यता हर्षस्थानेऽपि रोदिमि। किं मे दुःखमेवंविधम्। अधुना तु मे सर्वदुःखान्येव दूरीभूतानि। अस्मिन्स-मये मरणमेव मे जीवितम्। जीवितं पुनर्मरणम्। तद्यदि ममोपरि स्नेहः, करोषि मत्प्रियं हितं वा, तन्ममोपरि स्नेहावद्धयापि प्रियसख्या तथा कर्तव्यम्; यथा न तातोऽम्बा च मच्छोकादात्मानं परित्यजतः, यथा च मयि वाञ्छितं मनोरथं त्वयि पूरयतः; येन परलोकगताया

अपि मे जलाञ्जलिदानाय पुत्रकस्त्वयि भविष्यति। यथा च मे सखीजनः परिजनो वा न स्मरति, शून्यं वा भवनमालोक्य न दिशो गृह्णाति, तथा करिष्यसि। पुत्रकस्य मे भवनाङ्गणे सहकारपोतस्य त्वया मच्चिन्तयैव माधवीलतया सहोद्वाहमङ्गलं स्वयमेव निर्वर्तनीयम्। वासभवने मे शिरोभागनिहितः कामदेवपटः पाटनीयः। पञ्जरबन्धदुःखाद्दूराकी कालिन्दी सारिका शुकश्च परिहासो द्वावपि मोक्तव्यौ। क्रीडापर्वतकः कस्मैचिदुपशान्ताय तपस्विने प्रतिपादयितव्यः। शरीरोपकरणानि मे ब्राह्मणेभ्यः प्रतिपादनीयानि। अपरमपि यत्ते रोचते, तदपि स्वीकर्तव्यम्। अहं पुनरिमममृतकिरणरश्मिभिर्दग्धशेषम् उज्ज्वलचिताज्वालामालिनि विभावसौ देवस्य कण्ठलग्ना निर्वापयाम्यात्मानम्' इत्यभिदधानैव, महाश्वेतां कण्ठे गृहीत्वा, निर्विकारवदनैव पुनस्तामवादीत् — 'प्रियसखि, तवास्ति कीदृश्यपि प्रत्याशा, यया पुनः समागमाकाङ्क्षिणी क्षणे क्षणे मरणाभ्यधिकानि दुःखान्यनुभवन्ती जीवितमलज्जाकरं धारयसि। मम पुनः सर्वतो हताशायाः सापि नास्ति। तदामन्त्रये प्रियसखीं पुनर्जन्मान्तरसमागमाय' इत्यभिधाय, चन्द्रापीडचरणौ स्रवत्स्वेदामृतार्द्राभ्यां कराभ्यामुत्क्षिप्याङ्केन धृतवती।

अथ तत्करस्पर्शेनोच्छ्वसत इव चन्द्रापीडदेहात् झटिति तुहिनमयमिव सकलमेव तं प्रदेशं कुर्वाणमव्यक्तरूपं किमपि चन्द्रधवलं ज्योतिरियोज्जगाम। अनन्तरं चान्तरिक्षे क्षरन्तीवामृतमशरीरिणी वागश्रूयत—'वत्से महाश्वेते, पुनरपि त्वं मयैव समाश्वासयितव्या वर्तसे। तत्ते पुण्डरीकशरीरं मल्लोके मत्तेजसाप्यायमानमविनाशि भूयस्त्वत्समागमनाय तिष्ठत्येव। इदमपरं मत्तेजोमयं स्वत एवाविनाशि विशेष-

तोऽमुना कादम्बरीकरस्पर्शेनाप्यायमानं चन्द्रापीडशरीरं शापदोषाद्विमुक्तमप्यन्तरात्मना कृतशरीरान्तरसंक्रान्तेर्योगिन इव शरीरमत्रैव भवत्योः प्रत्ययार्थमा शापक्षयादास्ताम् । यत्नतः परिपालनीयमा समागमप्राप्तेः' इति ।

पत्रलेखा तु तेन तस्य ज्योतिषः स्पर्शेन लब्धसंज्ञोत्थाय, आविष्टेव वेगाद्द्रावित्वा, परिवर्धकहस्तादाच्छिद्येन्द्रायुधम्, तेनैव सहात्मानमच्छोदसरस्यक्षिपत् ।

अथ तयोर्निमज्जनसमयानन्तरमेव, तस्मात्सरसः सलिलात्, शैवलोत्करमिव शिरसि लग्नं जटाकलापमुद्वहन्, उद्विग्नाकृतिस्तापसकुमारकः सहसैवोदतिष्ठत् । उत्थाय च दूरत एव विलोकयन्तीं महाश्वेतामुपसृत्य शोकगद्गदमवादीत् — 'गन्धर्वराजपुत्रि, जन्मान्तरादिवागतोऽपि प्रत्यभिज्ञायतेऽयं जनः, न वा' इति । सा त्वेवं पृष्टा शोकानन्दमध्यवर्तिनी, ससंभ्रममुत्थाय कृतपादवन्दना, प्रत्यवादीत् — 'भगवन्कपिञ्जल, नाहमेवंविधापुण्यवती, या भवन्तमपि न प्रत्यभिजानामि । अथवा युक्तैवंदृशी मय्यनात्मज्ञायां संभावना, याहमेकान्तत एव व्यामोहहता स्वर्गं गतेऽपि देवे पुण्डरीके जीवामि । तत्कथय — केनासावुत्क्षिप्य नीतः? किं वा तत्रोपजातम्, येनैतावता कालेन वार्तापि न दत्ता । कुतो वा त्वमेकाकी तेन विना समागतः' । स तु प्रत्यवादीत् — ''गन्धर्वराजपुत्रि, श्रूयताम्—अहं हि कृतार्तप्रलापामपि त्वामेकाकिनीं समुत्सृज्य, तं पुरुषमनुव्रजन्, जवेनोदपतम् । स तु मे प्रतिवचनमदत्त्वैवातिक्रम्य तारागणम्, चन्द्रलोकमगच्छत् । तत्र च महोदयाख्यायां सभायाम्, इन्दुकान्तमये

महति पर्यङ्के, तत्पुण्डरीकशरीरं स्थापयित्वा मामवादीत्—'कपिञ्जल, जानीहि मां चन्द्रमसम्। अहं खल्वनेन ते प्रियवयस्येन कामापराधाज्जीवितमुत्सृजता निरापराधः संशप्तः — 'दुरात्मन्निन्दुहतक, यथाहं त्वया करैः संताप्योत्पन्नानुरागः सन्नसंप्राप्तहृदयवल्लभासमागमसुखः प्राणैर्वियोजितः, तथा त्वमपि कर्मभूमीभूतेऽस्मिन्भारते वर्षे जन्मनि जन्मन्येवोत्पन्नानुरागोऽप्राप्तसमागमसुखः, तीव्रतरां हृदयवेदनामनुभूय, जीवितमुत्स्रक्ष्यसि' इति। अहं तु तेनास्य शापहुतभुजा झटिति ज्वलित इव 'निरागाः किमनेनात्मदोषानुबन्धेन निर्विवेकबुद्धिना शप्तोऽस्मि' इत्युत्पन्नकोपः 'त्वमपि मत्तुल्यदुःखसुख एव भविष्यसि' इति प्रतिशापमस्मै प्रायच्छम्। अपगतामर्षश्च विवेकमागतया बुद्ध्या विमृशन्महाश्वेताव्यतिकरमस्याधिगतवानस्मि। वत्सा तु महाश्वेता मन्मयूखसंभवादप्सरसः कुलाल्लब्धजन्मनि गौर्यामुत्पन्ना। तया चायं भर्ता स्वयंवृतः। अनेन च स्वयंकृतादेवात्मदोषान्मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम्। अन्यथा 'जन्मनि जन्मनि' इत्येषा वीप्सैव न चरितार्था भवति। तद्यावदयं शापदोषादपैति, तावदस्यात्मना विरहितस्य शरीरस्य मा विनाशो भूदिति मयेदमुत्क्षिप्य समानीतम्। वत्सा च महाश्वेता समाश्वासिता। तदिदमत्र मत्तेजसाप्यायमानमाशापक्षयात्स्थितम्। अधुना त्वं गत्वेनं वृत्तान्तं श्वेतकेतवे निवेदय। महाप्रभावोऽसौ कदाचिदत्र प्रतिक्रियां काचिदपि करोति' इत्युक्त्वा मां व्यसर्जयत्।

अहं तु विना वयस्येन शोकावेगान्धो गीर्वाणवर्त्मनि धावन्, अन्यतममतिक्रोधनं वैमानिकमलङ्घयम्। स तु मां दहन्निव निरीक्ष्या-

ब्रवीत्—'दुरात्मन्, यदेवमतिविस्तीर्णे गगनमार्गे त्वयाहमुद्दामप्रचारिणा तुरंगमेणेवोल्लङ्घितः, तस्मात्तुरंगम एव भूत्वा मर्त्यलोकेऽवतर' इति । अहं तु तमुद्बाष्पपक्ष्मा कृताञ्जलिरवदम्—'भगवन्, वयस्यशोकान्धेन त्वं मयोल्लङ्घितो नावज्ञया । तत्प्रसीद । उपसंहर शापमाशु त्वमिमम्' इति । स तु मां पुनरवादीत्—'यन्मयोक्तम्, तन्नान्यथा भवितुमर्हति । तदेतत्ते करोमि — कियन्तमपि कालं यस्यैव वाहनतामुपयास्यसि, तस्यैवावसाने स्नात्वा विगतशापो भविष्यसि' इति । एवमुक्तस्तु तमहमवदम्—'भगवन्, यद्येवम्, ततो विज्ञापयामि—तेनापि मत्प्रियवयस्येन पुण्डरीकेण चन्द्रमसा सह शापदोषान्मर्त्यलोक एवोत्पत्तव्यम् । तदेतावन्तमपि भगवान्प्रसादं करोतु मे दिव्येन चक्षुषावलोक्य — यथा तुरंगमत्वेऽपि मे तेनैव प्रियवयस्येन सहावियोगेन कालो यायात्' इति । स त्वेवमुक्तो मुहूर्तमिव ध्यात्वा पुनर्मामवादीत् — 'उज्जयिन्यामपत्यहेतोस्तपस्यतस्तारापीडनाम्नो राज्ञः सनिदर्शनं चन्द्रमसा तनयत्वमुपगन्तव्यम्; वयस्येनापि ते पुण्डरीकेण तन्मन्त्रिण एव शुकनासनाम्नः । त्वमपि तस्य महोपकारिणश्चन्द्रात्मनो राजपुत्रस्य वाहनतामुपयास्यसि' इति । अहं तु तद्वचनानन्तरमेवाधःस्थिते महोदधौ न्यपतम् । तस्माच्च तुरंगीभूयैवोदतिष्ठम् । संज्ञा तु मे तुरङ्गत्वेनापि न व्यपगता' ।

इत्येतच्छ्रुत्वा 'हा देव पुण्डरीक, जन्मान्तरेऽप्यविस्मृतमदनुराग, लोकान्तरगतस्यापि तेऽहमेव राक्षसी विनाशायोपजाता । दग्धप्रजापतेरियदेव मन्निर्माणे दीर्घजीवितप्रदाने च प्रयोजनं निष्पन्नम्, यत्पुनः पुनस्ते व्यापादनम्' इत्येवं कृतार्तप्रलापां महाश्वेतां कपिञ्जलः पुनरपि

सानुकम्पमवादीत्—'गन्धर्वराजपुत्रि, कस्तवात्र दोषः, येनैवमनिन्द-नीयमात्मानं निन्दापदैर्योजयसि। यथा च शापदोषादिदमुपगतं भवत्योर्द्वयोरपि दुःखम्, तथा मया कथितमेव। चन्द्रमसोऽपि भारती भवतीभ्यां श्रुतैव। द्वयोरेव श्रेयसे यदेव भवत्याङ्गीकृतम्, तदेवानु-बध्यतां व्रतपरिग्रहोचितं तपः। तपसा हि सम्यक्कृतस्य नास्त्यसाध्यं नाम किंचित्' इति महाश्वेतां पर्यबोधयत्।

उपशान्तमन्युवेगायां च महाश्वेतायाम्, कादम्बरी कपिञ्जलम-प्राक्षीत् — 'भगवन्, पत्रलेखया त्वया चास्मिन्सरसि जलप्रवेशः कृतः। तत्किं तस्याः पत्रलेखायाः संवृत्तमित्यावेदनेन प्रसादं करोतु भगवान्' इति। स तु प्रत्यवादीत् — 'राजपुत्रि, सलिलपातानन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः। तदधुना क्व चन्द्रापीडस्य जन्म, क्व वैशम्पायनस्य, किं वा पत्रलेखाया वृत्तमिति सर्वस्यैवास्य वृत्तान्तस्यावगमनाय गतोऽहं प्रत्यक्षलोकत्रयस्य तातस्य श्वेतकेतोः पादमूलम्' इत्यभिदधान एव गगनमुदपतत्।

अथ गते तस्मिन्, कादम्बरी महाश्वेतामवादीत्—'प्रियसखि, तुल्यदुःखतया त्वया सह नयता न खल्वसुखं स्थापितास्मि भगवता विधात्रा। अद्य मे शिरः समुद्घाटितम्। संप्रति मरणं जीवितं वा न दुःखाय मे। तत्कोऽपरः प्रष्टव्यो मया। केन वापरेणोपदेष्ट-व्यम्। तदेवं गते यत्करणीयम्, तदुपदिशतु मे प्रियसखी। नाहमा-त्मना किंचिदपि वेद्मि—किं कृत्वा श्रेयः' इत्युक्तवतीं कादम्बरीं महा-श्वेता प्रत्यवादीत्—'प्रियसखि, किमत्र प्रश्नेनोपदेशेन वा। यदेवेय-मनतिक्रमणीया प्रियतमसमागमप्रत्याशा कारयति, तदेव करणीयम्।

तत्त्वमन्यत्किं करोषि, यस्याः प्रत्ययस्थानमिदं चन्द्रापीडशरीरमङ्क एवास्ते। तदन्यथात्वेऽस्य करणीया चिन्ता। यावत्पुनरिदमविनाशि तिष्ठति, तावदेव तस्यानुवृत्तिं मुक्त्वा किमन्यत्करणीयम्। अप्रत्यक्षाणां हि देवतानां मृदश्मकाष्ठमय्यः प्रतिमाः श्रेयसे पूजासत्कारेणोपचर्यन्ते। किं पुनः प्रत्यक्षदेवस्य चन्द्रापीडनामान्तरितस्य चन्द्रमसो मूर्तिरनाराधितप्रसन्ना'।

इत्युक्तवत्यां महाश्वेतायाम्, कादम्बरी तामखेदार्हां चन्द्रापीडतनुमन्यतरस्मिन् शिलातले शनैरखेदयन्ती स्थापयित्वा, मङ्गलमात्रकावस्थापितैककरवलया स्नानशुचिर्भूत्वा, देवतोचितामपचितिं संपाद्य, तथैवाङ्के समारोपितचन्द्रापीडचरणद्वया, राजपुत्रलोकेन स्वपरिजनेन च सह निराहारा तं दिवसमक्षिपत्।

यथैव च दिवसमशेषम्, तथैव तां गम्भीरमेघोपरोधभीमां जाग्रती समुपविष्टैव क्षणमिव क्षपां क्षपितवती। प्रातश्च तत् उन्मीलितं चित्रमिव चन्द्रापीडशरीरमवलोक्य, शनैः शनैः पाणिना स्पृशन्ती, पार्श्वस्थितां मदलेखामवादीत् — 'प्रियसखि मदलेखे, न वेद्मि—किं रुचेर्वशात् उत निर्विकारतयैवेति। अहं तु तादृशीमेवमां तनुमालोकयामि। तत् त्वमपि तावदादरतो निरूपय' इत्येवमुक्ता मदलेखा तां प्रत्यवादीत्—'प्रियसखि, किमत्र निरूपणीयम्। अन्तरात्मनो विरहाद्व्यापारमात्रकमस्योपरतम्। अन्यत्, तादृशमेवेदं मनागप्यनुन्मुक्तं श्रिया वदनम्। तथैव चेदमविगलितसहजलावण्यसौकुमार्याणां सौष्ठवमङ्गानाम्। तत्सत्या सा भारती, कपिञ्जलावेदितश्च शापवृत्तान्त इति संभावयामि' इत्युक्तवत्यां मदलेखायाम्, आनन्दनिर्भरा

महाश्वेतायै राजपुत्रलोकायापि दर्शयित्वा कादम्बरी, शरीरस्थितिकरणायादिदेश सकलमेव राजलोकम्। आत्मनापि महाश्वेतयोपनीतानि तथैव सह सपरिवारा फलान्युपभुक्तवती। अन्येद्युश्चोपजातदृढतरप्रत्यया मदलेखामवादीत् 'प्रियसखि, देवस्य शरीरमिदमुपचरन्तीभिरवश्यम् आ शापक्षयादस्माभिरधुनात्र स्थातव्यम्। तदिममत्यद्भुतं वृत्तान्तं तातस्याम्बायाश्च गत्वा निवेदय। यथा मामेवंविधां दुःखभागिनीमागत्य न पश्यतः, तथा करिष्यसि। न शक्नोम्यहं तातमम्बां च दृष्ट्वा शोकवेगं धारयितुम्। मया चोपरतमेव देवमालोक्य न रुदितम्। सा, किमपरम्, अधुना निःसंशयितजीविते देवे प्रतिपन्ननियमा रोदिमि' इत्यभिधाय तां व्यसर्जयत्।

गत्वा आगतया च तया 'प्रियसखि, सिद्धं तेऽभिवाञ्छितम्। एवं संदिष्टं तातेनाम्बया च—शापावसाने जामात्रा सहैवानन्दबाष्पनिर्भरमाननारविन्दं ते द्रक्ष्यावः' इत्यावेदिते, निर्वृतेनान्तरात्मना अतिष्ठत्।

अथापगतवति जलदसमये, घननिरोधोद्बन्धादिवोन्मुक्ते जीवलोके, प्रसरन्तीष्विवाशासु, सलिलापसरणक्रमतरङ्ग्यमाणासु सुकुमारतीरसैकतरेखासु, एकदा कादम्बरीमुपसृत्य मेघनादो व्यज्ञपयत्—"देवो युवराजश्चिरयतीत्युत्ताम्यता हृदयेन देवेन तारापीडेन वार्ताहाराः प्रहिताः। ते च देव्या एव शोकशल्यघटनां परिहरद्भिर्यथावृत्तं सर्वमाख्यायास्माभिरभिहिताः — भवतां हस्ते देवेन चन्द्रापीडेन न किंचित्प्रतिसंदेष्टव्यम्। नापि देव्या कादम्बर्या। तदकृतविलम्बा एव गत्वैवमखिलवृत्तान्तं तारापीडायावेदयत' इत्येवमभिहितास्तु

तेऽस्मान्मन्युनिर्भराः प्रत्यवदन्—'यथा भवद्भिः कथितम्, तत्तथा । तिष्ठतु तावत्क्रमागतस्नेहो भक्तिरनुवृत्तिर्वा । कार्यगौरवकृतं कुतूहलमेव देवावलोकनं प्रति बलात्प्रेरयत्यस्मान् । तद्विज्ञाप्य देवीम्, देवस्य युवराजस्य पादप्रणामेनास्माकं सफलयतु भवानागमनपरिश्रमम् । अन्यथा भूमिमेतावतीमागत्य, संभवे सति, अप्रत्यक्षीकृतयुवराजशरीरा गताः सन्तः किं तारापीडेन वक्तव्या वयम् । किं वास्माभिर्देवो विज्ञापयितव्यः' इत्यावेदिते, देवी प्रमाणम्' इति विज्ञाप्य पुनस्तूष्णीं स्थितवति मेघनादे, गद्गदिकयावगृह्यमाणकण्ठी कथंकथमपि चिरात्कादम्बरी प्रत्युवाच — 'स्थान एव हि तैरगमनमङ्गीकृतम् । अनवलोक्य देवम्, एवमेव याताः सन्तः किमुच्यन्ताम् । अपि च, वृत्तान्त एवायमेवंविधो लोकातीतः, यत्रावलोकनेनापि न संप्रत्ययः समुत्पद्यते । किं पुनरनालोकनेन । तदपरिलम्बितं प्रवेश्यन्ताम् । पश्यन्तु देवम् । ततो यास्यन्ति' इति ।

आज्ञानन्तरं च मेघनादेन प्रवेशितान्दूरत एव समं बाष्पपातेन पञ्चाङ्गालिङ्गितमहीतलांस्ताननन्यदृष्टिश्चिरमिवालोक्य, कादम्बरी स्वयमेवाभाषत—'भद्रमुखाः, परित्यज्यतामयं क्रमागतस्नेहसद्भावसुलभः शोकावेगः । यत्खल्वनालोचितावधि दुःखावसानमेव दुःखम्, तन्मरणभीरोर्भवतु नाम शोकावेगाय । यत्पुनः सुखोदर्कम्, तत्पुरःस्थितया सुखप्रत्याशयैवान्तरितं नापतति हृदये । भवद्भिरपि दृष्टं च पुरेवाक्षततनोर्देवस्य वदनम् । तद्गम्यतामधुना वार्तोन्मुखमतेर्देवस्य पादमूलम् । न चायं प्रत्यक्षदृष्टोऽप्युपरतशरीराविनाशवृत्तान्तः प्रकाशनीयः । दृष्टोऽस्माभिरक्लिष्टदर्शनि । निपुणि' इति तदेवानुदर्शनीयम् । यतः कार-

णादुपरतिः खल्ववश्यंभाविनी प्राणिनां कथंचित्प्रत्ययमुत्पादयति । शरीराविनाशः पुनः प्राणैर्विनाकृतानां दृश्यमानोऽप्यश्रद्धेय एव । तदस्यावेदनेन सुदूरस्थितमपि गुरुजनं मरणसंशये निक्षिप्य वर्तमाने प्रयोजनमेव नास्ति । प्रत्यागतजीविते जीवितेश्वरे, स्वयमेवायमत्यद्भुतोऽर्थो गुरुजनेष्वाप्रकटीभविष्यति' इत्यादिश्य, किञ्चिद्विमृश्य, मेघनादमैब्रवीत्—'मेघनाद, वेद्मि, संस्तुजनस्यैतदनुचितमिति । तथापि गुरूणां चेतःपीडामवेक्षमाणया मयैवमभिहितम् । कथ्यतां वास्तवं वृत्तम् । परं तु एभिः सहापरः कश्चिच्छ्रद्धेयवचाः संप्रत्ययाय व्रजतु' । इत्येवमादिष्टस्तु मेघनादः, त्वरितकनामानं कुमारबालसेवकमाहूय तैः सह व्यसर्जयत् ।

अथ सुबहुदिवसापगमे वार्तां विनोत्ताम्यन्ती चन्द्रापीडस्यैवागमनायोपयाचितं कर्तुमवन्तिमातृणामायतनं गता विलासवती, 'देवि, दिष्ट्या वर्धसे । प्रसन्नास्तेऽवन्तिमातरः । परागता युवराजवार्ताहराः' इति सहसैव संभ्रमप्रधावितात्परिजनादुपश्रुत्य, 'केन दृष्टाः? कियद्दूरे वर्तन्ते?, किं वा तैः कथितं कुशलं मे वत्सस्य?' इति पृच्छन्त्येवाद्राक्षीत् इतस्ततो यथादर्शनं संवशः प्रधावितेन नरपतिप्रतिबद्धेनाप्रतिबद्धेन चोज्जयिनीनिवासिना जनेन 'आगतो न युवराजः? कियद्दूरे भवद्भिः परित्यक्तः? दिवसेष्वेषु क्व वर्तते? क्व वा भवद्भिर्यात्वा दृष्टः? यदर्थमयं क्लेशः कृतो युवराजेन, स दृष्टो वैशम्पायनः, प्रत्यानीतो वा?' इत्येतानि चान्यानि च प्रतिपदं पृच्छ्यमानानप्यदत्तवचसः, संदर्भानिव सर्वदुःखानाम्, दूरत एव त्वरितकसमेतांस्तान् लेखहारकान् ।

आलोक्य तस्मिन्नेव मातृगृहाङ्गणे स्थित्वा, शून्यशरीरान्निर्जीवितानिवोपसर्पतस्तान् गद्गदतरमुच्चैरकृतप्रणामानेवावादीत् — 'भद्राः, कथयताशु वत्सस्य मे वार्तामात्रम्। इदं त्वन्यथैव किमपि कथयति मे हृदयम्' इति। एवं पृष्टान् 'देवि, दृष्टोऽस्माभिरच्छोदसरस्तीरे युवराजः। शेषमेष त्वरितको निवेदयिष्यति' इत्यभिवदत एव तानुद्बाष्पमुखी प्रत्युवाच—'किमपरमयं तपस्वी निवेदयिष्यति। दूरतः प्रभृत्यपसृतप्रहर्षेणैवोपसर्पणेन, प्रतिलेखमालिकाशून्यैः शिरोभिः, यदावेदयितव्यम्, तद्भवद्भिरेवावेदितम्'।

"हा वत्स जगदेकचन्द्र चन्द्रापीड, किं भूतं ते, येन नागतोऽसि। तात चन्द्रापीड, पीडिता ब्रवीमि, न कोपादुपालभमाना—न युक्तमेतत्तव 'अम्ब न परिलम्बं मनागपि करोमि' इति तथा मे पुरः प्रतिज्ञायान्यत्र क्वाप्यवस्थातुम्। वत्स, गच्छत एव ते मयास्य हतहृदयस्य शङ्कयैव ज्ञातम्—दुष्करं मे वत्सस्य पुनर्मुखावलोकनमिति। बलाद्गतोऽसि। किं करोमि। को वात्र दोषो वत्सस्य। मन्दभाग्याया ममैवैतान्यपुण्यानां विलसितानि। भवन्त्यपुण्यवत्योपि लोके, न पुनर्मया सदृशी पापकारिणी; यस्यास्त्वमेक एवमकाण्ड एवाच्छिद्य क्वापि नीतोऽसि। विप्रलब्धास्मि दग्धवेधसा। वत्स, सुदूरस्यापि पादयोः पतामि ते। निवर्तस्वैकवारम्। 'अम्ब' इत्यालपतस्ते वदनमालोकयितुमुत्कण्ठितं मे हृदयम्। न वेद्मि किमपि—प्रियतया ते, किमाकृतेः प्रत्ययात्, उत स्त्रीजनसहभुवो मूढभावादेवेति, अद्यापि न श्रद्दधाति मे हृदयमनिष्टं ते; येन न सहस्रधा स्फुटति। तात, किं ब्रवीमि, यथा – 'किमनेन सुतस्नेहानुचितेन लोकलज्जाकरेण वैक्लव्येन'

इति। एषा स्थितास्मि ते वत्स, वचनात्तूष्णीम्। न रोदिमि" इत्यभिदधानैवासन्नसखीजनावलम्बितशरीरा मोहमगात् ।

अथ विलासवतीपरिजनेनावेदिते तस्मिन्वृत्तान्ते, मन्दरास्फालनोद्वेल इव महाम्भोधिरुद्भ्रान्तचेताः, निर्जगाम नरपतिः। उपेत्य चावन्तिमातृगृहम्, कथं कथमपि चेतनामापाद्यमानां परिजनेन, अर्धोन्मीलितलोचनयुगां विलासवतीं दृष्ट्वा, समुपविश्य पार्श्वे, स्पर्शामृतवर्षिणा करेण स्पृशन् , शनैः शनैर्बाष्पगद्गदमवादीत्—'देवि, यदि सत्यमेवान्यादृशं किमपि वत्सस्य चन्द्रापीडस्य, ततो न जीव्यत एव। किमर्थमयमात्मा वत्सस्य कृते सकललोकसाधारणेनामुना वैक्लव्योपगमेन तुच्छतां नीयते। इयन्ति शुभान्युपात्तानि कर्माणि। किमपरं क्रियते। नाधिकस्य भाजनं सुखस्य वयम्। अनुपात्तं हि हृदयताडनमपि कुर्वद्भिर्न लभ्यत एवात्रात्मेच्छया। विधिर्नामापरः कोऽप्यत्रास्ते। यत्तस्मै रोचते, तत्करोति। नासौ कस्यचिदप्यायत्तः। एवं च पराधीनवृत्तौ सर्वस्मिन्, न किं वास्माभिर्लब्धम्? वत्सस्यातिदुर्लभो जन्मोत्सवः संभावितः। गृहीतविद्यस्य गुणवत्तयानन्दितं हृदयम्। दिग्विजयागतस्य प्रणमतः परिष्वक्तान्यङ्गानि। एतावदेव मनोरथशतवाञ्छितस्य वस्तुनो न संपन्नम्—यद्वधूसमेतस्य निजपदे प्रतिष्ठां कृत्वा तपोवने न गतम्। सर्वाभिवाञ्छितप्राप्तिस्तु महतः पुण्यराशेः फलम्। अपरमपि, किं वृत्तं वत्सस्येत्येतदद्यापि न परिस्फुटं केनचिदत्र कथितम्। एतावत्तु मया अव्यक्तमेव परिजनात्कथयतः कर्णे कृतम्—यथा—अस्मत्प्रहितैर्लेखहारिभिः सहापरो वत्सस्य मे बालसेवकस्त्वरितकनामा समायातः। स वेत्ति सर्वं वृत्तान्तम्। सोऽपि त्वया न

पृष्ट एवेति । तत् तं तु तावत्पृच्छाम: । ततो जीवितमरणयोरन्यतरदङ्गीकरिष्याम:' इत्यभिवदत्येव राजनि, परिजनान्तरितं त्वरितकमाहूय प्रतीहारो दर्शितवान् ।

'भद्र, कथय, किं वृत्तं वत्सस्य, येन आगमनाय मया तन्मात्रामात्येन च लिखितेऽपि नायात: । अनागमनकारणं वा किंचिन्न प्रतिलेखितवान्' इत्येवमादिष्टो राज्ञा त्वरितक:, गमनत: प्रभृति यथावृत्तं कथयितुमारेभे । राजा तु चन्द्रापीडहृदयस्फुटनवृत्तान्तं यावदाकर्ण्य, अतिक्षुभितशोकार्णवाक्रान्तिविक्लव:, प्रसार्य करम्, आर्तस्वरस्त्वरितकमवादीत्—'भद्र, विरम । संप्रति कथितं त्वया कथनीयम् । मयापि श्रुतम्, यच्छ्रोतव्यम् । पूर्णो मे प्रश्नदोहद: । आनन्दितं हृदयम् । सुखं स्थितोऽस्मि । हा वत्स, त्वयैकाकिना स्फुटतो हृदयस्यानुभूता वेदना । निर्व्यूढा त्वया वैशम्पायनस्योपरि प्रीति: । एवं दु:खभागिनो निस्त्रिंशा: कर्मचाण्डाला:, येषां तवापि हृदयस्फुटने निर्विकारत्वमेव । देवि, वज्रसारतोऽपि कठिनतरमेवेदमावयोर्हृदयम्, यन्न स्वयं सहस्रधा स्फुटति । तदुत्तिष्ठ, यावदेवातिदूरं न प्रयात्येकाकी वत्स:, तावदेवानुगमनाय प्रयतामहे । शुकनास, किमद्यापि तिष्ठसि । अयं स काल: स्नेहस्य । महाकालायतनसमीपे समादिश सपदि परिचारकाश्चितारचनाय । यात यथाभूमि भूमिपतय: । उत्सृष्टा: स्थ । यथा च नाद्यैवानाथताद्दु:खं जानन्ति प्रजा:, तथा करिष्यथ' इत्येवमार्तप्रलापिनं तारापीडं त्वरितको व्यज्ञापयत् — 'देव, स्फुटितेऽपि हृदये, ध्रियते शरीरेण युवराज: । शापदोषाद्वैशम्पायनस्य युवराजस्य च यथा जन्म, तथा निरवशेषं शृणोतु तावद्देव:' इति ।

तारापीडस्तु तदद्भुतमाकर्ण्य, दत्तावधानस्तेन कथ्यमानं यथादृष्टं यथाश्रुतं च निरवशेषं तत्सर्वमश्रौषीत्। श्रुत्वा च तमनेकचिह्नोत्पादितप्रत्ययं युवराजवैशम्पायनयोर्वृत्तान्तम्, ईषदिव विवर्तिताननः, विमर्शस्तिमिततारकां दृष्टिं निर्विशेषावस्थे शुकनासमुखेऽभ्यपातयत्। सुहृदस्तु स्वयं दुःखिता अपि निधानीकृत्यात्मदुःखम्, सुहृद्दुःखापनोदायैव यतन्ते। यतः शुकनासस्तदवस्थोऽपि स्वस्थवदवनिपतिमुवाच—'देव, विचित्रेऽस्मिन्संसारे, अनेकप्रकारमुत्पद्यमानस्य तिष्ठतो विनश्यतो वा स्थावरजङ्गमस्य न कदाचिदवस्था सा, या न संभवति। तत्कुतोऽयं देवस्यात्र वस्तुनि विमर्शः। यदि युक्तेर्विचारात्, कियन्त्यत्र युक्तिरहितान्यागमप्रामाण्याद्देवाभ्युपगतान्यविसंवादीनि दृश्यन्ते। मुद्राबन्धात् ध्यानाद्वा विषप्रसुप्तस्योत्थापने कीदृशी युक्तिः, अयस्कान्तस्य चायसः समाकर्षणे भ्रमणे वा, मन्त्राणां वैदिकानामवैदिकानां चानेकप्रकारेषु कर्मसु सिद्धौ। आगमेषु सर्वेष्वेव पुराणरामायणभारतादिषु सम्यगनेकप्रकाराः शापवार्ताः। तद्यथा — महेन्द्रपदवर्तिनो नहुषस्य राजर्षेरगस्त्यशापादजगरता। असुरगुरुशापाच्च ययातेस्तारुण्य एव जरसा भङ्गः। त्रिशङ्कोश्च पितृशापाच्चण्डालभावः। तिष्ठतु तावदन्य एव। योऽयमादिदेवो भगवानजः, स एव जमदग्नेरात्मजतामुपगतः; श्रूयते च—पुनश्चतुर्धात्मानं विभज्य, राजर्षेर्दशरथस्य, तथैव मथुरायां वसुदेवस्य। तन्मनुष्येषु देवतानामुत्पत्तिर्नैवासंभाविनी। न च पूर्वमनुष्येभ्यो गुणैः परिहीयते देवः। न चापि भगवतः कमलनाभादतिरिच्यते चन्द्रमाः। किमत्रासंभावनीयम्। अपि च, गर्भारम्भसंभवे देवेन देव्या वदने विशंश्चन्द्रमा एव दृष्टः। तथा ममापि

स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम्। तत्, उत्पत्तिं प्रति तयोर्नास्त्येव संदेहः। विनष्टयोः शरीरस्याविनाशः कथम्, कथं वा पुनर्जीवितप्रतिलम्भ इत्यत्राप्यखिललोकप्रख्यातप्रभावममृतमेवैकं कारणमावेदितम्। तच्चन्द्रमसि विद्यत इत्येषास्त्येव वार्ता। तत्सर्वमेतदित्थमेवावगच्छतु देवः। तयोरेवं शापः, अस्माकं पुनर्वर एव। तदस्मिन्वस्तुनि मनागपि न देवेन देव्या वा शोकः कार्यः। अपरमपि, यद्यदेवं गते श्रेयस्करं श्रूयते, ज्ञायते वा, तत्तदद्यैवारभ्य क्रियतां कार्यतां च कर्म। न खलु वैदिकानामवैदिकानां वा कर्मणामसाध्यं नाम किंचिदपि। उत्पत्तिरपि तयोः कृच्छ्रलब्धयोरीदृशेनैव प्रकारेणोपजाता'।

इत्युक्तवति शुकनासे, सशोक एव राजा प्रत्यवादीत्—'सर्वमेवमेतत्, यदार्येणाभिहितम्। कोऽन्यो बुध्यते। केन वापरेण वय परिबोधनीयाः। किं तु तद्वत्सस्य मे वैशम्पायनदुःखात्स्फुटनं हृदयस्याग्रतो दृष्टिलग्नं सर्वमेवान्यदन्तरयति। तदेवमप्रत्यक्षिते वत्सस्य वदने, संस्तम्भमेवात्मनो न शक्नोमि कर्तुम्। यत्र च ममायमीदृशः प्रकारः, तत्र देव्याः परिबोधनं दूरापेतमेव। तद्गमनात् ऋतेऽन्य उपाय एव नास्ति जीवितसंधारणायेत्येवमवधारयत्वार्यः' इत्युक्तवति तारापीडे, चिरात्तनयपीडया तत्पुरः परित्यज्य लज्जां विलासवती कृताञ्जलिरुच्चैर्जगाद—'आर्यपुत्र, यद्येवम्, किमपरं विलम्बितेन। उत्ताम्यति मे हृदयं वत्सस्य दर्शनाय। दुःखापनोदार्थं स्फुटनमङ्गीकृतमासीत्। तदपि संप्रति दर्शनकाङ्क्षया न रोचत एव। जानामि वरं दीर्घकालमपि दुःखान्यनुभवन्ती सकृदपि वत्सस्य दर्शनाय जीवितास्मि; न पुनरसह्यदुःखोपशान्तये संप्रत्येव मृतास्मीति। तदस्य

पुनराशानिबन्धनस्य गमनमपि हृदयस्य तावद्विनोदतां व्रजतु' इति वदन्तीमेव विलासवतीमासाद्य, अन्यतमः परिणतवयाः षट्कर्मा समुपसृत्य स्वस्तिपूर्वकं व्यज्ञापयत् — 'देवि, सर्वत एवापरिस्फुटेन वार्ताकलकलेनाकुलीकृतहृदया मनोरमा स्वयमेम धावन्त्यागता। राज्ञो लज्जमाना नोपगता स्थानमिदम्। तदेपा मातृगृहस्य पृष्ठतस्तिष्ठति। पृच्छति च देवीम् — किमेभिः कथितम्? जीवति वा मे वत्सो वैशम्पायनः? स्वस्थशरीरो वा? ढौकितो वा पुनर्युवराजस्य? क्व वर्तते? तावागमिष्यतो वा? कियद्भिर्दिवसैः?' इति।

राजा तु दीर्ण इव शुचा, विलासवतीमवादीत् — 'देवि, न श्रुतं किंचिदपि वत्सयोः प्रियसख्या ते। अन्यतश्च श्रुत्वा कदाचिज्जीवितेनैव वियुज्यते। तदुत्तिष्ठ, स्वयमेव धैर्यमालम्ब्य, सर्ववृत्तान्तानुकथनेन संस्थापय प्रियसखीम्। तयाप्यार्यशुकनासेन सहायातव्यम्' इत्येवमुक्त्वा, विलासवतीं व्यसर्जयत्। आत्मनापि शुकनासेन सह गमनसंविधानमकारयत्।

अथोत्ताम्यता हृदयेन राजा संततमविच्छिन्नकैः प्रयाणकैर्वहन्, अबहुभिरेव दिवसैरासमादाच्छोदम्। आसाद्य च दूरस्थित एव प्रथममापतमानश्ववारान्वार्तान्वेषणाय त्वरितकेन सार्धं प्रहितवान्।

अथ तैः सार्धमागच्छन्तम्, परस्परावरणेनैवात्मदर्शनमभिरक्षन्तम्, अक्षतमपि हतमिव, जीवन्तमपि मृतमिव, मेघनादपुरःसरं सकलमेव उपसर्पन्तं राजपुत्रलोकमालोक्य, उच्छ्वसित इव निवृत्य सावरणपर्याणवर्तिनीं विलासवतीमवादीत्—'देवि, दिष्ट्या वर्धसे। ध्रियते सत्यमेव शरीरेण वत्सः, येन सकल एवायं तच्चरणकमलानु-

जीवी राजपुत्रलोकस्तत्पादमूलादागतः' इति। सा तु तदाकर्ण्य, किंचिदात्मपाणिनैवोत्सारितावरणसिचयाञ्चला निश्चलया दृष्ट्या चिरमिवावलोक्य तनयनिर्विशेषं राजपुत्रलोकम्, धैर्यमुन्मुच्य, उच्चैरारटितवती—'हा वत्स, कथं सहपांसुक्रीडितस्यैतावतो राजपुत्रलोकस्य मध्ये त्वमेवैको न दृश्यसे' इति। तथारटन्तीं तु तां समाश्वास्य, राजा मेघनादमप्राक्षीत्—'मेघनाद, कथय, को वृत्तान्तो वत्सस्य' इति। स तु व्यज्ञापयत्—'देव, चेतनाविरहाच्चेष्टामात्रकमेवापगतम्। शरीरे पुनः, ज्ञायते—दिवसे दिवसेऽभ्यधिका कान्तिः समुपजायते' इति। राजा तु तच्छ्रुत्वा, जीवितप्रतिलम्भे समुपजातप्रत्याशः, 'श्रुतं देव्या मेघनादस्य वचनम्? तदेहि, चिरात्पुनः कृतार्थयामो दर्शनेनात्मानम्। पश्यामो वत्सस्य वदनम्' इत्यभिदधान एवाभिवर्धितगतिविशेषया करेण्वा महाश्वेताश्रममगमत्।

अथ सहसैव तच्चन्द्रापीडगुरुजनागमनमाकर्ण्य, धावित्वा ह्रिया महाश्वेता गुहाभ्यन्तरमविशत्; चित्ररथतनयापि मोहान्धकारम्। तदवस्थयोश्च तयोः शुकनासावलम्बितशरीरो राजा विवेशाश्रमपदम्; तदनु मनोरमावलम्बिता विलासवती। प्रविश्य च सहजयैव कान्त्या अविरहितमुपरतसर्वप्रयत्नं सुप्तमिव तं पुत्रवत्सला तनयमालोक्य, यावन्न परापतत्येव तारापीडः, तावद्विलासवती विधारयन्तीं मनोरमामप्याक्षिप्य दूरत एव प्रसारितबाहुलताद्वया 'एहि जात दुर्लभक, चिराद्दृष्टोऽसि। देहि मे प्रतिवचनम्। आलोकय सकृदपि माम्। अनुचितं तात, तवैतदवस्थानम्।' उत्थायाङ्कोपगमनेन मे संपादय तनयोचितं स्नेहम्। न चानाकर्णितपूर्वं बाल्येऽपि त्वया मम वचनम्।

अद्य किमेवं विलपन्त्या अपि न शृणोषि। जात, केन रोषितोऽसि। एषा तोषयामि वत्स, पादयोर्निपत्य। पुत्र, चन्द्रापीड, प्रणम तावत्प्रत्युद्गम्य त्वत्स्नेहादेवातिदूरमागतस्य पितुः पादौ। क्व सा गता ते गुरुभक्तिः। क्व ते गुणाः। क्व सा धर्मज्ञता। क्व सा बन्धुप्रीतिः। क्व सा परिजनवत्सलता। कथमभाग्यैर्मे सर्वमेकपद एव उत्सृज्य, एवमौदासीन्यमवलम्ब्य स्थितोऽसि। अथवा यथा ते सुखम्, तथा तिष्ठ। वयमुदासीनहृदयास्त्वयि' इति कृतार्तप्रलापा, चन्द्रापीडस्य चरणावुत्तमाङ्गे कृत्वा, उन्मुक्तकण्ठमरोदीत्। तथा रुदतीं तु तामन्तरितनिजपीडस्तारापीडो भुजाभ्यामवलम्ब्याब्रवीत्—'देवि, यद्यप्यावयोः सुकृतैरपत्यतामुपगतः, तथापि देवतामूर्तिरेवायमशोचनीयः। तदुन्मुच्यतामयमिदानीं मनुष्यलोकोचित. शोचितव्यवृत्तान्तः। अस्मिञ्शोके कृते, न किंचिदपि भवति। केवलं गल एव स्फुटति रटतः, न हृदयम्। निरर्थकं प्रलपितमेव निर्याति वदनात्, न जीवितम्। अपरम्—अस्यामवस्थायामावाभ्यामपि तावत्परमवष्टम्भं कृत्वा मनोरमा शुकनासश्च संधारणीयौ, ययोर्लोकान्तरितो वैशम्पायनः। तिष्ठतां तावदेतावपि। यस्याः प्रभावात्पुनरनुभवनीयो वत्सस्य जीवितप्रतिलम्भाभ्युदयमहोत्सवः, सैवेयं गन्धर्वराजतनया वधूस्तेऽद्यापि संज्ञां न प्रतिलभते। तदेनां तावदुत्थाप्याङ्के कृत्वा चेतनां लम्भय। ततो यथेच्छं रोदिष्यसि'।

इत्यभिहिता राज्ञा विलासवती 'क्व सा मे वत्सस्य जीवितनिबन्धनं वधूः' इत्यभिदधत्येव ससंभ्रममुपसृत्य, अप्रतिपन्नसंज्ञामेवाङ्केनादाय कादम्बरीम्, चन्द्रापीडस्पर्शशिशिरेण च पाणिना हृदये

स्पृशन्ती, 'समाश्वसिहि मातः, त्वया विनाद्यैव प्रभृति केन संधारितं वत्सस्य मे चन्द्रापीडस्य शरीरम्। मातः, त्वममृतमयीव जातासि, येन वत्सस्य पुनर्वदनमालोकितम्' इत्यवादीत्। कादम्बरी तु तेन चन्द्रापीडनामग्रहणेन तेन च तन्निर्विशेषवृत्तिना विलासवतीशरीर-स्पर्शेन लब्धसंज्ञापि, लज्जावनम्रमुखी प्रतिपत्तिमूढा, मदलेखया अङ्कादवतार्य, परवशेव यथाक्रममकार्यत वन्दनं गुरूणाम्।

अथ प्रत्यापन्नचेतनायां चित्ररथतनयायाम्, चन्द्रापीडमेवोज्जीवितं मन्यमानो राजा मदलेखामाहूयादिदेश — 'दर्शनसुखमात्रकमस्माकं विधीयमानम्। तच्चास्माभिरासादितम्। तत् यादृशेनैवोपचारेणैतावतो दिवसानुपचरितवती वधूर्वत्सस्य शरीरम्, स एवोपचारो नास्मदनुरोधाल्लज्जया वा मनागपि परिहरणीयः। वयं निष्प्रयोजना द्रष्टार एव केवलम्। किमस्माभिरिह स्थितैर्गतैर्वा। यस्याः करस्पर्शेनाप्यायितमेतदविनाशि, सैव वधूः पार्श्वेऽस्य तिष्ठतु' इत्यादिश्य निर्जगाम।

निर्गत्य चोपकल्पितं निजावासमगत्वैव तपस्विवासोचितेऽन्यतरस्मिन्नासन्न एवाश्रमतरुलतामण्डपे समुपविश्य, निर्विशेषदुःखं सकलमेव राजचक्रमाहूय, सबहुमानमवादीत् — 'न भवद्भिरवगन्तव्यम्, यथा—अद्य शोकावेगादेवैतदहमङ्गीकरोमीति। पूर्वचिन्तित एवायमर्थः, यथा—वधूसमेतस्य चन्द्रापीडस्य वदनमालोक्य संक्रामितनिजभरेण मया क्वचिदाश्रमपदे गत्वा पश्चिमं वयः क्षपयितव्यमिति। स चायं मे भगवता कृतान्तेन पुराकृतैः कर्मभिर्वा विरूपैरेवं समुपनमितः। किमपरं क्रियते। अनतिक्रमणीया नियतिः। तदिच्छामि चिरकाङ्क्षितं

मनोरथं पूरयितुम्। तदस्य वस्तुनः कृते भवन्तो मया प्रार्थनीयाः' इत्युक्त्वा, संनिहितान्यपि परित्यज्योचितानि सर्वसुखानि, अनुचितान्यङ्गीकृत्य वन्यानि, — तथा हि — हर्म्यबुद्धिं वृक्षमूलेषु, संस्तुतजनस्नेहं हरिणेषु, आहारहार्दं कन्दमूलफलेषु, नर्मालापं धर्मसंकथासु, तनयस्नेहं तरुषु संक्रमय्य, तथा तपस्विजनोचिताः क्रियाः कुर्वन्, अविच्छेदात्मायं प्रातश्चानुभूतचन्द्रापीडदर्शनसुखो दुःखान्यगणयन्, नरपतिः सपरिवारः समं देव्या शुकनासेन च तत्रैवातिष्ठत्" इति।

एवं च कथयित्वा भगवान् जाबालिः, जराभिभवविच्छायं स्मितं कृत्वा, ताञ्छावकानवादीत् — 'दृष्टमायुष्मद्भिरिदमन्तःकरणापहारिणः कथारसस्याक्षेपसामर्थ्यम्। यत्कथयितुं प्रवृत्तोऽस्मि, तत्परित्यज्यैव कथारसात्कथयन्नतिदूरमतिक्रान्तोऽस्मि। तत् यः स कामोपहतचेताः स्वयंकृतादेवाविनयाद्दिव्यलोकतः परिभ्रश्य, मर्त्यलोके वैशम्पायननामा शुकनाससूनुरभवत्, स एवैष पुनः स्वयंकृतेनाविनयेन कोपितस्य पितुराक्रोशात् महाश्वेताकृताच्च सत्याभिध्यानादस्यां शुकजातौ पतितः' इति।

एवं वदत्येव भगवति जाबालौ, बाल्येऽपि मे सुप्तप्रबुद्धस्येव पूर्वजन्मान्तरोपात्ताः समस्ता एव विद्या जिह्वाग्रेऽभवन्। उपदेशाय मनुजस्येव चेयं विस्पष्टवर्णाभिधाना भारती संपन्ना। किं बहुना। मनुष्यशरीरात् ऋते सर्वमन्यत्तत्क्षणमेव मे महाश्वेतानुरागादिकमुपगतम्। तथा चोत्सुकान्तरात्मा भगवन्तं जाबालिं कथमपि शनैः शनैर्व्यज्ञापयम् — 'भगवन्, त्वत्प्रसादादाविर्भूतज्ञानोऽस्मि संवृत्तः।

स्मृताः खलु मया सर्व एव पूर्वबान्धवाः। स्मृत्वा च तान् स्फुटतीव मे हृदयम्। न च तान्स्मृत्वापि तथा, यथा चन्द्रापीडम्; यस्य मदुपरतिश्रवणमात्रकात्स्फुटितं हृदयम्। तत्तस्यापि जन्माख्यानेन प्रसादं करोतु भगवान्, येनायं तिर्यग्योनिवासोऽपि मे तेन सहैकत्र वसतो न पीडाकरः संजायते' इति। एवं च विज्ञापितो भगवान् जाबालिः सस्नेहकोपगर्भं प्रत्यवादीत्—'दुरात्मन्, ययैतावतीं दशामुपनीतोऽसि. कथं तामेव तरलहृदयतामनुबध्नासि। अद्यापि पक्षावपि नोद्भिद्येते। तत्संचरणक्षमस्तु तावद्भव। ततो मा प्रक्ष्यसि' इति। एवमुक्ते भगवता, समुपजातकुतूहलो हारीतः पप्रच्छ —'तात, महानयं विस्मयो मे। कथय, कथमस्य मुनिजातौ वर्तमानस्य तादृशी कामपरता जाता? यया जीवितमपि न संधारयितुं पारितम्। कथं च दिव्यलोकसंभूतस्य तथा स्वल्पमायुः संवृत्तम्'' ।

एवं च पृष्टः सूनुना भगवाञ्जाबालिः प्रत्यवादीत्—'स्पष्टमेवात्र कारणं वत्स। अयं हि कामरागमोहमयादल्पसारात्स्त्रीवीर्यादेव केवलादुत्पन्नः। श्रुतौ च पठ्यत एतत्—यादृशाद्वै जायते, तादृगेव भवतीति। लोकेऽपि च प्रायः कारणगुणभाञ्ज्येव कार्याणि दृश्यन्ते। तथा चैतदायुर्वेदेऽपि श्रूयते। तदयमुत्पन्न एवेदृशः, येनास्य तादृशी कामपरता जाता, मरणं च तथोपनतम्। अधुनापि तादृश एवाल्पायुरयम्। शापावसानोत्तरकालमस्याक्षयेणायुषा योगो भविष्यति। तावदियं कथास्ताम्। रसाक्षेपादचेतितैवास्माभिः प्रभातप्राया रजनी। प्रभाविरहादनुन्मृष्टरजतदर्पणाभमिदमपरान्तावलम्बि वर्तते रजनिकरबिम्बम्। एष पम्पासरःशायिना प्रबोधाशंसी समुच्चरति कोलाहलः

श्रोत्रहारी विहंगमानाम्। प्रत्यासन्ना अग्निविहारवेला' इत्यभिदधान एव गोष्ठीं भङ्क्त्वोदतिष्ठत् ।

अथोत्थिते भगवति जाबालौ, वीतरागापि समस्तैव सा तपस्विपरिषत् कथारसाद्विस्मृतगुरूचितप्रतिपत्तिः, शृण्वतीवोत्कण्टकितकाया, स्तम्भितेव चिरमिव स्थित्वा, यथास्थानं जगाम । हारीतस्तु मामात्मपर्णशालां नीत्वा, प्राभातिकक्रियाकरणाय निर्ययौ । निर्गते च तस्मिन्, तेन सर्वकार्याक्षमेण तिर्यग्जातिपतनेन पीडितान्तरात्मा, चिन्तां प्राविशम्—'अत्र तावदनेकभवसुकृतशतसहस्राधिगम्यं मानुष्यकमेव दुर्लभम्। तत्राप्यपरं सकलजातिविशिष्टं ब्राह्मण्यम्। ततोऽपि विशिष्टतरमासन्नामृतपदं मुनित्वम्। तस्यापि विशेषान्तरं किमपि दिव्यलोकनिवासित्वम्। तद्यनेतावतः स्थानात्स्वदोषैरात्मा पातितः, तेन कथमधुना सर्वक्रियाविहीनेनास्यास्तिर्यग्जातेः समुद्धृतः स्यात् । तन्निष्प्रयोजनेनामुना जीवितेन किं मे परिरक्षितेन । तत्परित्यजाम्येतच्छरीरम् । पूर्यतामस्मद्व्यसनदानैकचिन्तादुःस्थितस्य विधेर्मनोरथः' इति । एवं च जीवितपरित्यागचिन्तानिमीलितं मा समुच्छ्वासयन्निव हारीतोऽभ्यधात्—'भ्रातर्वैशम्पायन, दिष्ट्या वर्धसे। पितुस्ते भगवतः श्वेतकेतोः पादमूलात्कपिञ्जलस्त्वामेवान्विष्यन्नायातः' इति ।

अहं तु तच्छ्रुत्वा 'क्वासौ' इति वदन्नेव, अग्रतो गगनागमनवेगात् अयथास्थितजटाकलापम्, मदवलोकनदुःखोद्गतं च बाष्पजललवविसरमीक्षणाभ्यां युगपदुत्सृजन्तम्, समुज्झितक्लेशमपि मदर्थे क्लिश्यन्तम्, कृतज्ञम् अकृतज्ञः, वचनकरम् अनाश्रवः, महात्मानं दुरात्मा, कपिञ्जलमद्राक्षम्। दृष्ट्वा च तमवदम् — 'सखे कपिञ्जल,

एवं जन्मद्वयान्तरितदर्शनमपि त्वां दृष्ट्वा किं सरभसमुत्थाय दूरत एव प्रसारितभुजद्वयो गाढालिङ्गनेन सुखमनुभविष्यामि । किं करेणावलम्ब्यासनपरिग्रहं कारयिष्यामि' इति । एवमात्मानमनुशोचन्तमेव मां कपिञ्जलः करद्वयेनोत्क्षिप्य, भूयसा मन्युवेगेनोत्तमाङ्गे कृत्वा मच्चरणौ, इतरवदरोदीत् ।

तथा रुदन्तं तु तं वाङ्मात्रप्रतीकारः पुनरवदम् — "सखे कपिञ्जल, सकलक्लेशपरिभूतस्य पापात्मनो ममेदं युज्यते, यत्त्वया प्रारब्धम् । त्वं पुनर्बालोऽपि न स्पृष्ट एवामीभिः संसारबन्धात्मकैर्दोषैः । तत्किमधुना मूढजनगतेन वर्त्मना । समुपविश्य तावत्कथय यथावृत्तं वार्ताम् । अपि कुशलं तातस्य? मद्वृत्तान्तमाकर्ण्य किमुक्तवान् ? कुपितः, न वा?' इति ।

स त्वेवमुक्तो मया, प्रक्षाल्य मुखमाख्यातवान्—"सखे कुशलं तातस्य । अयं चास्मद्वृत्तान्तः प्रथमतरमेव तातेन दिव्येन चक्षुषा दृष्टः । दृष्ट्वा च प्रतिक्रियायै कर्म प्रारब्धम् । ममारब्ध एव कर्मणि, तुरगभावाद्विमुक्तो गतोऽस्मि तातस्य पादमूलम् । गतं च मां भयादनुपसर्पन्तमालोक्याहूयाज्ञापितवान् — 'वत्स कपिञ्जल, परित्यज्यतां स्वदोषशङ्का । ममैवायं खलु शठमतेः सर्व एव दोषः; येन जानताप्युत्पत्तिसमय एव वत्सस्य कृते नेदमायुष्करं कर्म निर्वर्तितम् । अधुना सिद्धप्रायमेवेदम् । न दुःखासिका भावनीया । मत्पादमूले तावत्स्थीयताम्' इति । अद्य च प्रातरेवाहूय मामाज्ञापितवान् — 'वत्स कपिञ्जल, महामुनेर्जाबालेराश्रमपदं सुहृत्ते प्राप्तः । जन्मान्तरस्मरणं चास्योपजातम् । तद्गच्छ संप्रति तं द्रष्टुम् । मदीयया चाशिषानुगृह्य वक्त-

व्यीऽसौ—वत्स, यावदिदं कर्म परिसमाप्यते, तावत्त्वयास्मिन्नेव जावालेः पादमूले स्थातव्यम्' इति। अपि च, त्वद्दुःखदुःखिताम्बा ते श्रीरपि तस्मिन्नेव कर्मणि परिचारिका वर्तते। तया तु शिरस्युपाघ्राय, एतदेव पुनः पुनः संदिष्टम्"।

एवमुक्त्वा दूयमानहृदयं तमवदम्—'सखे कपिञ्जल, किं दूयसे। त्वयापि मन्दपुण्यस्य मम कृते तुरङ्गमतामापन्नेन पराधीनवृत्तिना बहुतराण्येव दुःखान्यनुभूतानि। कथं सोमपानोचितेनामुनास्येन समुत्पादितसफेनरक्तस्रवाः खरखलीनक्षतयो विसोढाः। कथं च ब्रह्मसूत्रोद्वाहिनि देहेऽस्मिन्वध्रोत्पीडनकृताः पीडाः समुपजाताः' इति। एभिरन्यैश्च पूर्ववृत्तान्तालापैस्तत्कालविस्मृततिर्यग्जातिदुःखः सुखमतिष्ठम्।

उपरोहति च मध्याह्नं सवितरि, कृताहारः कपिञ्जलः क्षणमिव स्थित्वा मामब्रवीत्—'अहं हि तातेन त्वा समाश्वासयितुम्, जाबालिपादमूलात् आ कर्मपरिसमाप्तेर्न त्वया चलितव्यमित्येतच्चादेष्टुं विसर्जितः। अन्यत्, अहमपि तत्रैव कर्मणि व्यग्रतर एव। तद्व्रजामि संप्रति' इति। अहं तु तच्छ्रुत्वा विषण्णवदनस्तं प्रत्यवदम्—'सखे कपिञ्जल, एवं गते किं ब्रवीमि। किं तातस्याम्बाया वा संदिशामि। सर्वं त्वमेव वेत्सि' इति। स त्वेवमुक्तो मया, पुनः पुनस्तत्रावस्थानाय मां संनिधाय, अन्तरिक्षमतिक्रम्य, क्वाप्यदर्शनमगात्। गते च तस्मिन्, हारीतो निर्वर्तितस्नानादिक्रियाकलापः सन्, आत्मनैव सहापराह्णसमये पुनर्मामाहारमकारयत्।

एवं संवर्ध्यमानः, कतिपयैरेव दिवसैरुत्पन्नोत्पतनसामर्थ्यः,

'गमनक्षमस्तु संवृत्तोऽस्मि । तत्र नाम चन्द्रापीडोत्पत्तिपरिज्ञानम् । महाश्वेता पुनः सैवास्ते । भवतु, तत्रैव गत्वा तिष्ठामि' इति निश्चित्य, एकदा प्रातर्विहारनिर्गत एवोत्तरां ककुभं गृहीत्वावहम् । अबहुदिवसाभ्यस्तगमनतया स्तोकमेव गत्वा, अवाशीर्यन्तेव मेऽङ्गानि श्रमेण । तदवस्थश्च शिथिलायमानपक्षतिः, 'अत्र पतामि, अत्र पतामि' इति पतन्नेवान्यतमस्य सरस्तीरतरुनिकुञ्जस्योपर्यात्मानममुञ्चम् । चिरादिवोन्मुक्ताध्वक्रमः, अध्वश्रमनिःसहान्यङ्गानि विश्रमयितुमन्यतमां शाखामारुह्य स्थितः सन्, अध्वश्रमसुलभां निद्रामगच्छम् । चिरादिव च लब्धप्रबोधो बद्धमात्मानमपश्यम् । अग्रतश्च पाशविरहितमिव कालपुरुषम्, आशये केशेषु चास्निग्धम्, वपुषि वचसि च परुषम्, पुरुषमद्राक्षम् । आलोक्य च तं तादृशम्, आत्मन उपरि निष्प्रत्याश एवापृच्छम् — 'भद्र, कस्त्वम्? किमर्थं वा त्वया बद्धोऽस्मि? यदि आमिषतृष्णया; तत्किमिति सुप्त एव न व्यापादितोऽस्मि । किं मया निरागसा बन्धदुःखमनुभावितेन । अथ केवलमेव कौतुकात्, ततः कृतं कौतुकम् । मुञ्चतु मामिदानीं भद्रमुख' । एवमुक्तः स मामुक्तवान्—'महात्मन्, अहं खलु क्रूरकर्मा जात्या चाण्डालः । न च मया त्वमामिषलोभेन कुतूहलेन वा बद्धः । मम खलु स्वामी पक्कणाधिपतिः । तस्य दुहिता कौतुकमयं प्रथमं वयसि वर्तते । तस्यास्त्वं केनापि दुरात्मना कथितः । तया च श्रुत्वा, उत्पन्नकौतुकात्त्वद्ग्रहणाय बहव एवापरे मादृशाः समादिष्टाः । तदद्य पुण्यैर्मयासादितोऽसि । तदहं तत्पादमूलं त्वां प्रापयामि । बन्धे मोक्षे चाधुना सा प्रभवति' इति ।

अहं तु तच्छ्रुत्वा संविग्नान्तरात्मा चेतस्यकरवम्—'अहो मे मन्दपुण्यस्य दारुणतरः कर्मणां विपाकः, येन मया म्लेच्छजातिभिरपि दूरतः परिहृतप्रवेशमधुना पक्कणं प्रवेष्टव्यम्, चण्डालबालकजनस्य क्रीडनीयेन च भवितव्यम् । दुरात्मन् पुण्डरीकहतक, धिग्जन्मलाभं ते, यस्य कर्मणामयमीदृशः परिणामः । किमर्थं प्रथमगर्भ एव न सहस्रधा शीर्णोऽसि' इत्येतानि चान्यानि च चेतसा विलप्य, पुनस्तमभ्यर्थनादीनमवदम्—'भद्रमुख, जातिस्मरो मुनिरस्मि जात्या । तत्त्वापि मामस्मान्महतः पापसंकटादुद्धृत्य धर्मो भवत्येवादृष्टसुखहेतुः । दृष्टेऽपि च, केनचिदपरेणादृष्टस्य मन्मुक्तिकृतः प्रत्यवायो नास्त्येव । तन्मुञ्चतु मां भद्रमुखः' इत्यभिदधानश्च पादयोरपतम् । स तु विहस्य मामब्रवीत्—'रे मोहान्ध, यस्य शुभाशुभकर्म साक्षिभूताः पञ्च लोकपालास्तवैवात्मशरीरस्थिता न पश्यन्ति, सोऽन्यस्य भयादकार्यं नाचरति । तन्नीतोऽसि मया स्वाम्याज्ञया' इति । एवमभिदधान एव मामादाय पक्कणाभिमुखमगच्छत् ।

अहं तु 'केषां पुनः कर्मणामिदं मे फलम्' इत्यन्तरात्मनाभिध्यायन्, प्राणपरित्यागं प्रति कृतनिश्चयोऽभवम् । नीयमानश्च तथा तेन, नानाविधग्राहकविहङ्गवाचालनकुशलैः कौलेयकमुक्तिसंचारणचतुरैश्चण्डालशिशुभिर्वृन्दशो दिशि दिशि मृगयां क्रीडद्भिर्दूरत एवावेद्यमानम्, सर्वतः करङ्कप्रायवृतिवाटम्, धवलीप्रायवाहनम्, स्त्रीमद्यप्रायपुरुषार्थम्, संनिवेशमिव सर्वश्मशानानाम्, पत्तनमिव सर्वपापानाम्, स्मर्यमाणमपि भयंकरं, पक्कणमपश्यम् ।

दृष्ट्वा च तं समुत्पन्नघृणोऽन्तरात्मन्यकरवम्—'अपि नाम सा

चाण्डालदारिका दूरत एव मामालोक्य, उत्पन्नकरुणा मोचयेत्? न जातिसदृशमाचरिष्यति? भविष्यन्त्येवंविधानि मे पुण्यानि? न निमेषमप्यत्र पदं कुर्याम्' इत्येवं कृताशंसमेव मां नीत्वा स चण्डालस्तस्यै चण्डालदारिकायै दर्शितवान्। सा तु प्रहृष्टतरवदना स्वकरयुगेनादाय माम् 'आः पुत्रक, प्राप्तोऽसि। सांप्रतं क्वापरं गम्यते। व्यपनयामि ते सर्वमिदं कामचारित्वम्' इत्यभिदधानैव मनागुद्घाटितद्वारे दारुपञ्जरे सम महाश्वेतावलोकनमनोरथैराक्षिप्य, अर्गलितद्वारा 'अत्र निर्वृतः संप्रति तिष्ठ' इत्यभिधाय, तूष्णीमस्थात्।

अहं तु तथा संरुद्धश्चेतस्यकरवम्—'महासंकटे पतितोऽस्मि। यदि तावदावेदितात्मावस्थः शिरसा प्रणिपत्य मुक्तये विज्ञापयाम्येनाम्, तदा, य एव मे गुणो दोषतामापद्य बन्धायोपजातः, स एव संवर्धितो भवति। 'साधु जल्पति' इत्येवाहमनया ग्राहितः। कास्या मदीयया बन्धनपीडया पीडा। नाहमस्यास्तनयः, न भ्राता, न बन्धुः। अथ मौनमालम्ब्य तिष्ठामि। तत्रापि शाठ्यप्रकुपिता कदाचिदितोऽप्यधिकामवस्थां प्रापयति माम्। नृशंसतमा हि जातिरियम्। अथवा, वरमितोऽप्यधिकमुपजातम्, न पुनश्चण्डालैः सह वागपि विमिश्रिता। अपि च, गृहीतमौनं निर्वेदात्कदाचिन्मुञ्चत्येव। वदंस्तु पुनर्न मोक्तव्य एवाहमनया। अपि च, यद्दिव्यलोकभ्रंशः, यन्मर्त्यलोके जन्म, यत्तिर्यग्जातौ पतनम्, यच्चाण्डालहस्तागमनम्, यच्चेदमेवंविधं पञ्जरबन्धदुःखम्, सर्व एवायमनियतेन्द्रियत्वस्यैव दोषः। तत्किमेकया वाचा। सर्वेन्द्रियाण्येव नियमयामि' इति निश्चित्य, मौनग्रहणमकरवम्।

उपनीतेऽपि च पानाशने, तं दिवसमनशनेनैवात्यवाहयम्। अन्येद्युश्चातिक्रामत्यशनकाले मे दूयमाने च हृदये, सा स्वपाणिनोपनीय नानाविधानि पक्वान्यपक्वानि च फलानि, सुरभि शीतलं च पानीयम्, स्निह्यन्तीवावोचत्–'क्षुत्पिपासार्दितानां हि पशुपक्षिणां निर्विचारचित्तवृत्तीनामुपनतेष्वाहारेष्वनुपयोगो न संभवत्येव। तत्, यद्येवंविधस्त्वं कोऽपि भोज्याभोज्यविवेककारी पूर्वजातिस्मरोऽस्मदीयमाहारं परिहरसि, तथापि तावद्भक्ष्याभक्ष्यविवेकरहितायां तिर्यग्जातौ वर्तमानस्य ते किं वा अभक्ष्यम्। प्रथममेवात्मा न विवेके स्थापितः। अधुना स्वकर्मोपात्तजातिसदृशमाचरतस्ते नास्त्येव दोषः। न चेदृशं किंचिदप्याहाराय मयोपनीतम्, यादृशेन चाण्डालाशनशङ्का समुत्पद्यते। फलानि तु ततोऽपि प्रतिगृह्यन्त एव। पानीयमपि चाण्डालभाण्डादपि भुवि पतितं पवित्रमेवेत्येवं जनः कथयति। तत्किमर्थमात्मानं क्षुधा पिपासया वा पातयसि' इति। अहं तु तेन तस्या वचसा विवेकेन च विस्मितान्तरात्मा, क्षुत्पिपासोपशमायाशनक्रियामङ्गीकृतवानस्मि। मौनं तु पुनर्नात्याक्षम्।

एवमतिक्रामति च काले, क्रमेण तरुणतामापन्ने मयि, एकदा प्रभाताया यामिन्याम्, उन्मीलितलोचनः, अद्राक्षमस्मिन्कनकपञ्जरे स्थितमात्मानम्। सापि चाण्डालदारिका यादृशी, तादृशी देवेनापि दृष्टैव। सकलमेव च तं पक्कणममरपुरसदृशमालोक्य, 'किमेतत्' इति कुतूहलात्प्रष्टुकामो यावन्न परित्यजाम्येव मौनम्, तावदेषा मामादाय देवपादमूलमायाता। तत् केयम्? किमर्थमनया चाण्डालतात्मनः

ख्यापिता? किमर्थं वाहं बद्धः? बद्धो वा किमर्थमिहानीतः? इत्यत्र वस्तुनि अहमपि देव इवानपगतकुतूहल एव" इति ।

राजा तु तच्छ्रुत्वा, समुपजाताभ्यधिककुतूहलः, तदानयनाय पुरः स्थितां प्रतीहारीमादिदेश । नचिरादेव प्रविश्य सा पुरस्तादूर्ध्वस्थितैव बभाषे—"भुवनभूषण रोहिणीपते, सर्वस्त्वयास्य दुर्मतेरात्मनश्च पूर्वजन्मवृत्तान्तः श्रुत एव । अत्रापि जन्मनि यथायं निषिद्धोऽपि पितुराज्ञामुल्लङ्घ्य वधूसमीपं प्रस्थितः, तथानेन स्वयमेव कथितम् । तदहमस्य दुरात्मनो जननी श्रीः । तथा प्रस्थितमेनं दिव्येन चक्षुषा दृष्ट्वा अस्य पित्रा अहं समादिष्टास्मि—'सत्र एव ह्यविनयप्रवृत्तोऽनुतापाग्निना न निवर्तते । तदयं ते तनयः कदाचिदस्या अपि तिर्यग्जातेरधस्तात्पतति । तद्यावदिदं कर्म न परिसमाप्यते, तावदेनं मर्त्यलोक एव बद्ध्वा धारय । यथा चानुतापोऽस्य भवति, तथा प्रतिविधेयमस्य' इति । तदस्य विनयायेदं विनिर्मितं मया । सर्वमधुना तत्कर्म परिसमाप्तम् । शापावसानसमयो वर्तते । शापावसाने च युवयोः सममेव सुखेन भवितव्यमिति त्वत्समीपमानीतो मयायम् । अत्रापि यच्चाण्डालजातिः ख्यापिता, तल्लोकसंपर्कपरिहाराय । तदनुभवतं संप्रति द्वावपि ममैव जन्मजराव्याधिमरणादिदुःखबहुले तनू परित्यज्य, यथेष्टजनसमागमसुखम्" इत्यभिदधानैव सा झटिति क्षितेर्गगनमुदपतत् ।

अथ राज्ञस्तद्वचनमाकर्ण्य संस्मृतजन्मान्तरस्य, मकरकेतुर्जीवितापहरणाय प्रतिरोधक इवान्तरा पदं चकार । तत्पदाक्रान्तिनिर्वासितमिव कादम्बरीशरणमुपजगामान्तःकरणम् । तद्गिरिशिखरजोत्क्षिप्तमिव नयनयुगलमश्रुजलमरसससर्ज । आपाण्डुतां च सद्यो वदनल-

वण्यमयासीत्। आर्द्रस्य दारुणो द्रव इव दह्यमानस्याङ्गेभ्यो निरगमत्स्वेदः। एवं च विहतसर्वबाह्यक्रियस्य, तामेवाभिध्यायतः, तामेव पश्यतः, धर्मक्रियामप्यकुर्वाणस्य, आत्मन्यपि विगलितस्नेहस्य, किं बहुना, कादम्बरीसमागमेऽप्यनुद्यमस्य, केवलमस्य काष्ठीभूतदेहस्य, दाहक्षमो झटित्येवारुरोह परां कोटिं कामानलः, राज्ञ एव तुल्यावस्थस्य महाश्वेतोत्कण्ठया पुण्डरीकात्मनो वैशम्पायनस्य च।

तस्मिन्नेव चान्तरे, तत्संधुक्षणायेव सकलमेव प्रेममयमिव, उत्सवमयमिव, औत्सुक्यमयमिव जनयन् जीवलोकं परावर्तत सुरभिमासः; येन च पर्याकुलितहृदया कादम्बरी सायाह्ने स्नात्वा निर्वर्तितकामदेवपूजा, तस्य पुरश्चन्द्रापीडमतिसुरभिशीतलैः स्नपयित्वाम्भोभिः, भावार्द्रया दृशा सुचिरमालोक्योत्कण्ठानिर्भरा, सहसा तमभिपत्य मुकुलितनयनपङ्कजा जीवन्तमिव निर्भरं कण्ठे जग्राह।

चन्द्रापीडस्य तु कादम्बरीकण्ठग्रहेण सद्यः सुदूरगतमपि कण्ठस्थानं पुनर्जीवितं प्रत्यपद्यत। उषःपरामृष्टेन्दीवरमुकुललीलयोदमीलत्कर्णान्तायतं चक्षुः। एवं च सुप्तप्रतिबुद्ध इव प्रत्यापन्नसर्वाङ्गचेष्टश्चन्द्रापीडः, तथा कण्ठलग्नां कादम्बरीं कण्ठे गृहीत्वा, भयोत्कम्पमानाङ्गयष्टिं न मोक्तुं न ग्रहीतुमात्मना पारयन्तीमवादीत् — 'भीरु, परित्यज्यतां भयम्। प्रत्युज्जीवितोऽस्मि तवैवामुना कण्ठग्रहेण। त्वं खल्वमृतसंभवादप्सरसां कुलादुत्पन्ना। तदेतावन्त्येव दिनानि पाणिना ते स्पृश्यमानोऽपि न यत्प्रत्युज्जीवितोऽस्मि, तच्छापदोषात्। अद्य तु स मे द्वितीयवारं व्यपगतः शापः। परित्यक्ता सा मया त्वद्विरहदुःखदायिनी मानुषी शूद्रकाख्या तनुः। एषापि च 'तवास्यां रुचिरुत्पन्ना' इति

त्वत्प्रीत्या प्रतिपन्ना पालिता च । तदयं लोकश्चन्द्रलोकश्च ते द्वावप्य-धुना चरणतलप्रतिबद्धौ । अपि च, प्रियसख्या अपि ते महाश्वेतायाः प्रियतमो मयैव सह विगतशापः संजातः' इत्यभिदधत्येव चन्द्रापीड-शरीरान्तरितवपुषि चन्द्रमसि, तादृशेनैव वेषेण—यादृशेन महाश्वेतो-त्कण्ठयोपरतः — तथैव कण्ठेनैकावलीं धारयन्, अम्बरतलादवतरन् अदृश्यत कपिञ्जलकरावलम्बी पुण्डरीकः ।

चन्द्रापीडस्तु तं कण्ठे गृहीत्वाब्रवीत्—'सखे पुण्डरीक, यद्यपि प्राग्जन्मसंबन्धाज्जामातासि, तथाप्यनन्तरजन्माहितसुहृत्स्नेहसद्भावेनैव मया सह वर्तितव्यं भवता' इत्येवं वदत्येव चन्द्रापीडे, चित्ररथहंसौ दिष्ट्या वर्धयितुं केयूरको हेमकूटमगमत् । मदलेखापि धावमाना निर्गत्य मृत्युंजयजपव्यग्रस्य तारापीडस्य विलासवत्याश्च पादयोः पतित्वा 'देव देव्या सह दिष्ट्या वर्धसे । प्रत्युज्जीवितो युवराजः समं वैशम्पायनेन' इत्यानन्दनिर्भरमुच्चैर्जगाद । राजा तु तच्छ्रुत्वा हर्षपरवशो विलासवतीं कण्ठेऽवलम्ब्य, शुकनासं कण्ठे संभावयन्, तत्रैवाग-च्छत् । चन्द्रापीडस्तु तथा हर्षपरवशं पितरमालोक्य, पुरेव चरणयो-रपतत् । अथ सत्वरापसृतः, तं तथा प्रणतमुन्नमय्य तारापीडोऽभ्य-धात् — 'पुत्र, यद्यपि पिताहं तव शापदोषात्स्वपुण्यैर्वा संजातः, तथापि जगद्वन्दनीयो लोकपालस्त्वम् । अपि च, मय्यपि नमस्यो योऽशः, सोऽपि मया त्वय्येव संक्रामितः । तदुभयथापि त्वमेव नम-स्कार्यः' इत्यभिदधदेव, समं राजपुत्रलोकसहस्रैः प्रतीपमस्य पादयोर-पतत् । विलासवती तु तं पुनः शिरसि पुनर्ललाटे पुनश्च कपोलयो-श्चुम्बित्वा, गाढतरं सुचिरमालिलिङ्ग । उन्मुक्तश्च मात्रा, उपसृत्य पुनः

पुनः कृतनमस्कारः, शुकनासं प्रणनाम। आशीःसहस्राभिवर्धितश्च तेन, आत्मनोपसृत्य यथानुक्रमं पित्रोः शुकनासस्य मनोरमायाश्च 'एष वो वैशम्पायनः' इति पुण्डरीकमदर्शयत्।

तस्मिन्नेव च प्रस्तावे, समुपसृत्य कपिञ्जलः शुकनासमवादीत्—'एवं संदिष्टमार्यस्य भगवता श्वेतकेतुना—अयं खलु पुण्डरीकः संवर्धित एव केवलं मया। आत्मजः पुनस्तव। अस्यापि भवत्स्वेव लग्नः स्नेहः। तत् 'वैशम्पायन एवायम्' इत्येवमवगत्य, अविनयेभ्यो निवारणीयः; 'परोऽयम्' इति कृत्वा नापेक्षणीयः। यच्चापगतशापोऽप्यात्मसमीपं नानीतः, तत्तत्रैवायमिति। अन्यच्च, आत्मानमस्मिन्नाचन्द्रकालीनायुषि स्थापयित्वा कृतार्थस्य, सप्रत्ययस्माद्दिव्यलोकादप्युपरिष्टाद्गन्तुमुद्यतं मे सत्त्वाख्यं ज्योतिः' इति। शुकनासस्तु प्रत्यवादीत्—'कपिञ्जल, सकलजगदाशयज्ञेन सता भगवता किमित्यादिष्टम्। सर्वथा स्नेहस्यायमसंतोषः' इत्येवंविधैश्च पूर्वजन्मवृत्तान्तानुस्मरणालापैः सर्वेषामेव तेषामचेतितेव सा क्षणदा प्रभाता। प्रातरेव च सकलगन्धर्वलोकानुगतौ समं मदिरागौरीभ्यां चित्ररथहंसौ तत्रैवाजग्मतुः। आगतयोश्च तयोस्तारापीडशुकनासाभ्यां सहानुभूतसंबन्धकोचितसंवादकथयोः सहस्रगुण इव महोत्सवः प्रावर्तत।

अथ प्रवर्तमान एव तस्मिन्, चित्ररथस्तारापीडमवादीत्—'विद्यमाने स्वभवने किमर्थमयमरण्ये महोत्सवः क्रियते। अपि च, यद्यप्यस्माकमयमेव परस्पराभिरुचिनिष्पन्नो धर्म्यो विवाहः, तथापि लोकसंव्यवहारोऽनुवर्तनीय एव। तद्गम्यतां तावदस्मदीयमवस्थानम्। ततः स्वभूमिं चन्द्रलोकं वा गमिष्यथ'। तारापीडस्तु तं प्रत्यवादीत्—

'गन्धर्वराज, यत्रैव निरतिशयं संपत्सुखम्, तदेव वनमपि भवनम् । तदीदृशं क्वापरत्र मया संपत्सुखं प्राप्तम् । अन्यच्च, संप्रति सर्वगृहाण्येव मया जामातरि ते संक्रामितानि । तद्वयस्य, वधूसमेतं तमेवादाय, गम्यतां गृहसुखानुभवनाय' इति । चित्ररथस्तु तथाभिहितः, चन्द्रापीडमादाय हेमकूटमगात् । गत्वा च चित्ररथः कादम्बर्या सह समग्रमेव स्वं राज्यं चन्द्रापीडाय न्यवेदयत् । पुण्डरीकायापि समं महाश्वेतया निजपदं हंसः । तौ तु हृदयरुचितवधूलाभमात्रकेणैव कृतार्थौ न किंचिदप्यपरं प्रत्यपद्येताम् ।

अन्यदा निर्वृतापि कादम्बरी, विषण्णमुखी, चन्द्रापीडमूर्तिं चन्द्रमसमप्राक्षीत् — 'आर्यपुत्र, सर्वे खलु वयं मृताः सन्तः प्रत्युज्जीविताः परस्परं संघटिताश्च । सा पुनर्वराकी पत्रलेखास्माकं मध्ये न दृश्यते । न विद्मः—किं तस्याः केवलाया वृत्तम्' इति । स तु प्रत्यवादीत् —'प्रिये, कुतोऽत्र । सा हि खलु मद्दुःखदुःखिनी रोहिणी शप्तं मामुपश्रुत्य 'कथं त्वमेकाकी मर्त्यलोकनिवासदुःखमनुभवसि' इत्यभिधाय, निवार्यमाणापि मया, प्रथमतरमेव मच्चरणपरिचर्यायै मर्त्यलोके जन्माग्रहीत् । इतश्च जन्मान्तरं गच्छता मया मदुपरमसमुन्मुक्तशरीरा पुनरपि मर्त्यलोकमवतरन्ती बलादावर्ज्यात्मलोकं विसर्जिता । तत्र पुनस्तां द्रक्ष्यसि' इति । कादम्बरी तु तच्छ्रुत्वा रोहिण्यास्तयोदारतया पतिव्रततया च विस्मितहृदया, परं लज्जिता, न किंचिदपि वक्तुं शशाक ।

एवं च चन्द्रापीडस्तत्र दशरात्रं स्थित्वा, परितुष्टहृदयाभ्यां श्वशुराभ्यां विसर्जितः, पितुः पादमूलमाजगाम ।

आगत्य च समकालमेवानुभूतक्लेशं राजलोकमात्मसमं कृत्वा, समारोपितराज्यभारः पुण्डरीके, कदाचिज्जन्मभूमिस्नेहादुज्जयिन्याम्, कदाचिद्गन्धर्वराजगौरवेण हेमकूटे, कदाचिद्रोहिणीबहुमानेन चन्द्रलोके, कादम्बरीरुच्या च सर्वत्रैवापरेष्वपि रम्यतरेषु तेषु तेषु स्थानेषु, न केवलं चन्द्रमाः, परस्पराबियोगेन सर्व एव सर्वकालं सुखान्यनुभवन्तः परां कोटिमानन्दस्याध्यगच्छन् ।



